# महाभारत - विराट पर्व


वैराटपर्व १

अध्याय ००१ . . . . . . . . . . . . . . . . . . . . . . . . १
अध्याय ००२ . . . . . . . . . . . . . . . . . . . . . . . . ४
अध्याय ००३ . . . . . . . . . . . . . . . . . . . . . . . . ७
अध्याय ००४ . . . . . . . . . . . . . . . . . . . . . . . . ९
अध्याय ००५ . . . . . . . . . . . . . . . . . . . . . . . . १५
अध्याय ००६ . . . . . . . . . . . . . . . . . . . . . . . . १८
अध्याय ००७ . . . . . . . . . . . . . . . . . . . . . . . . २०
अध्याय ००८ . . . . . . . . . . . . . . . . . . . . . . . . २२
अध्याय ००९ . . . . . . . . . . . . . . . . . . . . . . . . २६
अध्याय ०१० . . . . . . . . . . . . . . . . . . . . . . . . २८
अध्याय ०११ . . . . . . . . . . . . . . . . . . . . . . . . ३०
अध्याय ०१२ . . . . . . . . . . . . . . . . . . . . . . . . ३१

कीचकवधपर्व ३५

अध्याय ०१३ . . . . . . . . . . . . . . . . . . . . . . . . ३५
अध्याय ०१४ . . . . . . . . . . . . . . . . . . . . . . . . ३७
अध्याय ०१५ . . . . . . . . . . . . . . . . . . . . . . . . ४०
अध्याय ०१६ . . . . . . . . . . . . . . . . . . . . . . . . ४५
अध्याय ०१७ . . . . . . . . . . . . . . . . . . . . . . . . ४७
अध्याय ०१८ . . . . . . . . . . . . . . . . . . . . . . . . ५०
अध्याय ०१९ . . . . . . . . . . . . . . . . . . . . . . . . ५४

अध्याय ०२० . . . . . . . . . . . . . . . . . . . . . . . ५७
अध्याय ०२१ . . . . . . . . . . . . . . . . . . . . . . . ६१
अध्याय ०२२ . . . . . . . . . . . . . . . . . . . . . . . ६९
अध्याय ०२३ . . . . . . . . . . . . . . . . . . . . . . . ७३

गोग्रहणपर्व ७६
अध्याय ०२४ . . . . . . . . . . . . . . . . . . . . . . . ७६
अध्याय ०२५ . . . . . . . . . . . . . . . . . . . . . . . ७८
अध्याय ०२६ . . . . . . . . . . . . . . . . . . . . . . . ८०
अध्याय ०२७ . . . . . . . . . . . . . . . . . . . . . . . ८२
अध्याय ०२८ . . . . . . . . . . . . . . . . . . . . . . . ८५
अध्याय ०२९ . . . . . . . . . . . . . . . . . . . . . . . ८६
अध्याय ०३० . . . . . . . . . . . . . . . . . . . . . . . ८९
अध्याय ०३१ . . . . . . . . . . . . . . . . . . . . . . . ९३
अध्याय ०३२ . . . . . . . . . . . . . . . . . . . . . . . ९५
अध्याय ०३३ . . . . . . . . . . . . . . . . . . . . . . . १०१
अध्याय ०३४ . . . . . . . . . . . . . . . . . . . . . . . १०३
अध्याय ०३५ . . . . . . . . . . . . . . . . . . . . . . . १०६
अध्याय ०३६ . . . . . . . . . . . . . . . . . . . . . . . १०८
अध्याय ०३७ . . . . . . . . . . . . . . . . . . . . . . . ११४
अध्याय ०३८ . . . . . . . . . . . . . . . . . . . . . . . ११६
अध्याय ०३९ . . . . . . . . . . . . . . . . . . . . . . . १२२
अध्याय ०४० . . . . . . . . . . . . . . . . . . . . . . . १२५
अध्याय ०४१ . . . . . . . . . . . . . . . . . . . . . . . १२९
अध्याय ०४२ . . . . . . . . . . . . . . . . . . . . . . . १३२
अध्याय ०४३ . . . . . . . . . . . . . . . . . . . . . . . १३५
अध्याय ०४४ . . . . . . . . . . . . . . . . . . . . . . . १३७
अध्याय ०४५ . . . . . . . . . . . . . . . . . . . . . . . १४०
अध्याय ०४६ . . . . . . . . . . . . . . . . . . . . . . . १४३
अध्याय ०४७ . . . . . . . . . . . . . . . . . . . . . . . १४५
अध्याय ०४८ . . . . . . . . . . . . . . . . . . . . . . . १४७
अध्याय ०४९ . . . . . . . . . . . . . . . . . . . . . . . १५०

अध्याय ०५० . . . . . . . . . . . . . . . . . . . . . . . . . १५२
अध्याय ०५१ . . . . . . . . . . . . . . . . . . . . . . . . . १५५
अध्याय ०५२ . . . . . . . . . . . . . . . . . . . . . . . . . १५७
अध्याय ०५३ . . . . . . . . . . . . . . . . . . . . . . . . . १६०
अध्याय ०५४ . . . . . . . . . . . . . . . . . . . . . . . . . १६८
अध्याय ०५५ . . . . . . . . . . . . . . . . . . . . . . . . . १७०
अध्याय ०५६ . . . . . . . . . . . . . . . . . . . . . . . . . १७३
अध्याय ०५७ . . . . . . . . . . . . . . . . . . . . . . . . . १७६
अध्याय ०५८ . . . . . . . . . . . . . . . . . . . . . . . . . १७८
अध्याय ०५९ . . . . . . . . . . . . . . . . . . . . . . . . . १८०
अध्याय ०६० . . . . . . . . . . . . . . . . . . . . . . . . . १८४
अध्याय ०६१ . . . . . . . . . . . . . . . . . . . . . . . . . १८७
अध्याय ०६२ . . . . . . . . . . . . . . . . . . . . . . . . . १९०

वैवाहिकपर्व १९१
अध्याय ०६३ . . . . . . . . . . . . . . . . . . . . . . . . . १९१
अध्याय ०६४ . . . . . . . . . . . . . . . . . . . . . . . . . १९७
अध्याय ०६५ . . . . . . . . . . . . . . . . . . . . . . . . . २०२
अध्याय ०६६ . . . . . . . . . . . . . . . . . . . . . . . . . २०४
अध्याय ०६७ . . . . . . . . . . . . . . . . . . . . . . . . . २०८

# ॥ महाभारत विराटपर्व ॥

## वैराटपर्व

### अध्याय ००१

जनमेजय उवाच ॥

कथं विराटनगरे मम पूर्वपितामहाः ।
अज्ञातवासमुषिता दुर्योधनभयार्दिताः ॥ ००१ ॥

वैशंपायन उवाच ॥

तथा तु स वरा.ण्लब्ध्वा धर्माद्धर्मभृतां वरः ।
गत्वाश्रमं ब्राह्मणेभ्य आचख्यौ सर्वमेव तत् ॥ ००२ ॥

कथयित्वा तु तत्सर्वं ब्राह्मणेभ्यो युधिष्ठिरः ।
अरणीसहितं तस्मै ब्राह्मणाय न्यवेदयत् ॥ ००३ ॥

ततो युधिष्ठिरो राजा धर्मपुत्रो महामनाः ।
संनिवर्त्यानुजान्सर्वानिति होवाच भारत ॥ ००४ ॥

द्वादशेमानि वर्षाणि राष्ट्राद्विप्रोषिता वयम् ।

त्रयोदशोऽयं संप्राप्तः कृच्छ्रः परमदुर्वसः ॥ ००५ ॥

स साधु कौन्तेय इतो वासमर्जुन रोचय ।
यत्रेमा वसतीः सर्वा वसेमाविदिताः परैः ॥ ००६ ॥

अर्जुन उवाच ॥

तस्यैव वरदानेन धर्मस्य मनुजाधिप ।
अज्ञाता विचरिष्यामो नराणां भरतर्षभ ॥ ००७ ॥

किं तु वासाय राष्ट्राणि कीर्तयिष्यामि कानिचित् ।
रमणीयानि गुप्तानि तेषां किञ्चित्स्म रोचय ॥ ००८ ॥

सन्ति रम्या जनपदा बह्वन्नाः परितः कुरून् ।
पाञ्चालाश्चेदिमत्स्याश्च शूरसेनाः पटच्चराः ॥ ००९ ॥

दशार्णा नवराष्ट्रं च मल्लाः शाल्वा युगंधराः ॥ ००९ ॥

एतेषां कतमो राजन्निवासस्तव रोचते ।
वत्स्यामो यत्र राजेन्द्र संवत्सरमिमं वयम् ॥ ०१० ॥

युधिष्ठिर उवाच ॥

एवमेतन्महाबाहो यथा स भगवान्प्रभुः ।
अब्रवीत्सर्वभूतेशस्तत्तथा न तदन्यथा ॥ ०११ ॥

अवश्यं त्वेव वासार्थं रमणीयं शिवं सुखम् ।
संमन्त्र्य सहितैः सर्वैर्द्रष्टव्यमकुतोभयम् ॥ ०१२ ॥

मत्स्यो विराटो बलवानभिरक्षेत्स पाण्डवान् ।
धर्मशीलो वदान्यश्च वृद्धश्च सुमहाधनः ॥ ०१३ ॥

विराटनगरे तात संवत्सरमिमं वयम् ।
कुर्वन्तस्तस्य कर्माणि विहरिष्याम भारत ॥ ०१४ ॥

यानि यानि च कर्माणि तस्य शक्ष्यामहे वयम् ।
कर्तुं यो यत्स तत्कर्म ब्रवीतु कुरुनन्दनाः ॥ ०१५ ॥

अर्जुन उवाच ॥

नरदेव कथं कर्म राष्ट्रे तस्य करिष्यसि ।
विराटनृपतेः साधो रंस्यसे केन कर्मणा ॥ ०१६ ॥

मृदुर्वदान्यो ह्रीमांश्च धार्मिकः सत्यविक्रमः ।
राजंस्त्वमापदा क्लिष्टः किं करिष्यसि पाण्डव ॥ ०१७ ॥

न दुःखमुचितं किञ्चिद्राजन्वेद यथा जनः ।
स इमामापदं प्राप्य कथं घोरां तरिष्यसि ॥ ०१८ ॥

युधिष्ठिर उवाच ॥

शृणुध्वं यत्करिष्यामि कर्म वै कुरुनन्दनाः ।
विराटमनुसंप्राप्य राजानं पुरुषर्षभम् ॥ ०१९ ॥

सभास्तारो भविष्यामि तस्य राज्ञो महात्मनः ।
कङ्को नाम द्विजो भूत्वा मताक्षः प्रियदेविता ॥ ०२० ॥

वैडूर्यान्काञ्चनान्दान्तान्फलैर्ज्योतीरसैः सह ।
कृष्णाक्षा.ण्ल्लोहिताक्षांश्च निर्वर्त्स्यामि मनोरमान् ॥ ०२१ ॥

आसं युधिष्ठिरस्याहं पुरा प्राणसमः सखा ।
इति वक्ष्यामि राजानं यदि मामनुयोक्ष्यते ॥ ०२२ ॥

इत्येतद्वो मयाख्यातं विहरिष्याम्यहं यथा ।
वृकोदर विराटे त्वं रंस्यसे केन कर्मणा ॥ ०२३ ॥

---

# अध्याय ००२

भीम उवाच ॥

पौरोगवो ब्रुवाणोऽहं बल्लवो नाम नामतः ।
उपस्थास्यामि राजानं विराटमिति मे मतिः ॥ ००१ ॥

सूपानस्य करिष्यामि कुशलोऽस्मि महानसे ।
कृतपूर्वाणि यैरस्य व्यञ्जनानि सुशिक्षितैः ॥ ००२ ॥

तानप्यभिभविष्यामि प्रीतिं सञ्जनयन्नहम् ॥ ००२ ॥

आहरिष्यामि दारूणां निचयान्महतोऽपि च ।
तत्प्रेक्ष्य विपुलं कर्म राजा प्रीतो भविष्यति ॥ ००३ ॥

द्विपा वा बलिनो राजन्वृषभा वा महाबलाः ।
विनिग्राह्या यदि मया निग्रहीष्यामि तानपि ॥ ००४ ॥

ये च केचिन्नियोत्स्यन्ति समाजेषु नियोधकाः ।
तानहं निहनिष्यामि प्रीतिं तस्य विवर्धयन् ॥ ००५ ॥

न त्वेतान्युध्यमानान्वै हनिष्यामि कथञ्चन ।
तथैतान्पातयिष्यामि यथा यास्यन्ति न क्षयम् ॥ ००६ ॥

आरालिको गोविकर्ता सूपकर्ता नियोधकः ।
आसं युधिष्ठिरस्याहमिति वक्ष्यामि पृच्छतः ॥ ००७ ॥

आत्मानमात्मना रक्षंश्चरिष्यामि विशां पते ।
इत्येतत्प्रतिजानामि विहरिष्याम्यहं यथा ॥ ००८ ॥

युधिष्ठिर उवाच ॥

यमग्निर्ब्राह्मणो भूत्वा समागच्छन्नृणां वरम् ।
दिधक्षुः खाण्डवं दावं दाशार्हसहितं पुरा ॥ ००९ ॥

महाबलं महाबाहुमजितं कुरुनन्दनम् ।
सोऽयं किं कर्म कौन्तेयः करिष्यति धनञ्जयः ॥ ०१० ॥

योऽयमासाद्य तं दावं तर्पयामास पावकम् ।
विजित्यैकरथेनेन्द्रं हत्वा पन्नगराक्षसान् ॥ ०११ ॥

श्रेष्ठः प्रतियुधां नाम सोऽर्जुनः किं करिष्यति ॥ ०११ ॥

सूर्यः प्रतपतां श्रेष्ठो द्विपदां ब्राह्मणो वरः ।
आशीविषश्च सर्पाणामग्निस्तेजस्विनां वरः ॥ ०१२ ॥

आयुधानां वरो वज्रः ककुद्मी च गवां वरः ।
ह्रदानामुदधिः श्रेष्ठः पर्जन्यो वर्षतां वरः ॥ ०१३ ॥

धृतराष्ट्रश्च नागानां हस्तिष्वैरावतो वरः ।
पुत्रः प्रियाणामधिको भार्या च सुहृदां वरा ॥ ०१४ ॥

यथैतानि विशिष्टानि जात्यां जात्यां वृकोदर ।
एवं युवा गुडाकेशः श्रेष्ठः सर्वधनुष्मताम् ॥ ०१५ ॥

सोऽयमिन्द्रादनवरो वासुदेवाच्च भारत ।
गाण्डीवधन्वा श्वेताश्वो बीभत्सुः किं करिष्यति ॥ ०१६ ॥

उषित्वा पञ्च वर्षाणि सहस्राक्षस्य वेश्मनि ।
दिव्यान्यस्त्राण्यवाप्तानि देवरूपेण भास्वता ॥ ०१७ ॥

यं मन्ये द्वादशं रुद्रमादित्यानां त्रयोदशम् ।
यस्य बाहू समौ दीर्घौ ज्याघातकठिनत्वचौ ॥ ०१८ ॥

दक्षिणे चैव सव्ये च गवामिव वहः कृतः ॥ ०१८ ॥

हिमवानिव शैलानां समुद्रः सरितामिव ।
त्रिदशानां यथा शक्रो वसूनामिव हव्यवाट् ॥ ०१९ ॥

मृगाणामिव शार्दूलो गरुडः पततामिव ।
वरः संनह्यमानानामर्जुनः किं करिष्यति ॥ ०२० ॥

अर्जुन उवाच ॥

प्रतिज्ञां षण्ढकोऽस्मीति करिष्यामि महीपते ।
ज्याघातौ हि महान्तौ मे संवर्तुं नृप दुष्करौ ॥ ०२१ ॥

कर्णयोः प्रतिमुच्याहं कुण्डले ज्वलनोपमे ।
वेणीकृतशिरा राजन्नाम्ना चैव बृहन्नडा ॥ ०२२ ॥

पठन्नाख्यायिकां नाम स्त्रीभावेन पुनः पुनः ।
रमयिष्ये महीपालमन्यांश्चान्तःपुरे जनान् ॥ ०२३ ॥

गीतं नृत्तं विचित्रं च वादित्रं विविधं तथा ।
शिक्षयिष्याम्यहं राजन्विराटभवने स्त्रियः ॥ ०२४ ॥

प्रजानां समुदाचारं बहु कर्मकृतं वदन् ।
छादयिष्यामि कौन्तेय माययात्मानमात्मना ॥ ०२५ ॥

युधिष्ठिरस्य गेहेऽस्मि द्रौपद्याः परिचारिका ।
उषितास्मीति वक्ष्यामि पृष्टो राज्ञा च भारत ॥ ०२६ ॥

एतेन विधिना छन्नः कृतकेन यथा नलः ।
विहरिष्यामि राजेन्द्र विराटभवने सुखम् ॥ ०२७ ॥

---

# अध्याय ००३

युधिष्ठिर उवाच ॥

किं त्वं नकुल कुर्वाणस्तत्र तात चरिष्यसि ।
सुकुमारश्च शूरश्च दर्शनीयः सुखोचितः ॥ ००१ ॥

नकुल उवाच ॥

अश्वबन्धो भविष्यामि विराटनृपतेरहम् ।
ग्रन्थिको नाम नाम्नाहं कर्मैतत्सुप्रियं मम ॥ ००२ ॥

कुशलोऽस्म्यश्वशिक्षायां तथैवाश्वचिकित्सिते ।
प्रियाश्च सततं मेऽश्वाः कुरुराज यथा तव ॥ ००३ ॥

ये मामामन्त्रयिष्यन्ति विराटनगरे जनाः ।
तेभ्य एवं प्रवक्ष्यामि विहरिष्याम्यहं यथा ॥ ००४ ॥

युधिष्ठिर उवाच ॥

सहदेव कथं तस्य समीपे विहरिष्यसि ।
किं वा त्वं तात कुर्वाणः प्रच्छन्नो विचरिष्यसि ॥ ००५ ॥

सहदेव उवाच ॥

गोसंख्याता भविष्यामि विराटस्य महीपतेः ।
प्रतिषेद्धा च दोग्धा च संख्याने कुशलो गवाम् ॥ ००६ ॥

तन्तिपाल इति ख्यातो नाम्ना विदितमस्तु ते ।
निपुणं च चरिष्यामि व्येतु ते मानसो ज्वरः ॥ ००७ ॥

अहं हि भवता गोषु सततं प्रकृतः पुरा ।
तत्र मे कौशलं कर्म अवबुद्धं विशां पते ॥ ००८ ॥

लक्षणं चरितं चापि गवां यच्चापि मङ्गलम् ।
तत्सर्वं मे सुविदितमन्यच्चापि महीपते ॥ ००९ ॥

वृषभानपि जानामि राजन्पूजितलक्षणान् ।
येषां मूत्रमुपाघ्राय अपि वन्ध्या प्रसूयते ॥ ०१० ॥

सोऽहमेवं चरिष्यामि प्रीतिरत्र हि मे सदा ।
न च मां वेत्स्यति परस्तत्ते रोचतु पार्थिव ॥ ०११ ॥

युधिष्ठिर उवाच ॥

इयं तु नः प्रिया भार्या प्राणेभ्योऽपि गरीयसी ।
मातेव परिपाल्या च पूज्या ज्येष्ठेव च स्वसा ॥ ०१२ ॥

केन स्म कर्मणा कृष्णा द्रौपदी विचरिष्यति ।
न हि किञ्चिद्विजानाति कर्म कर्तुं यथा स्त्रियः ॥ ०१३ ॥

सुकुमारी च बाला च राजपुत्री यशस्विनी ।
पतिव्रता महाभागा कथं नु विचरिष्यति ॥ ०१४ ॥

माल्यगन्धानलङ्कारान्वस्त्राणि विविधानि च ।
एतान्येवाभिजानाति यतो जाता हि भामिनी ॥ ०१५ ॥

द्रौपद्युवाच ॥

सैरन्ध्र्योऽरक्षिता लोके भुजिष्याः सन्ति भारत ।
नैवमन्याः स्त्रियो यान्ति इति लोकस्य निश्चयः ॥ ०१६ ॥

साहं ब्रुवाणा सैरन्ध्री कुशला केशकर्मणि ।
आत्मगुप्ता चरिष्यामि यन्मां त्वमनुपृच्छसि ॥ ०१७ ॥

सुदेष्णां प्रत्युपस्थास्ये राजभार्यां यशस्विनीम् ।
सा रक्षिष्यति मां प्राप्तां मा ते भूद्दुःखमीदृशम् ॥ ०१८ ॥

युधिष्ठिर उवाच ॥

कल्याणं भाषसे कृष्णे कुले जाता यथा वदेत् ।
न पापमभिजानासि साधु साध्वीव्रते स्थिता ॥ ०१९ ॥

---

# अध्याय ००४

युधिष्ठिर उवाच ॥

कर्माण्युक्तानि युष्माभिर्यानि तानि करिष्यथ ।

मम चापि यथाबुद्धि रुचितानि विनिश्चयात्  ॥ ००१  ॥

पुरोहितोऽयमस्माकमग्निहोत्राणि रक्षतु ।
सूदपौरोगवैः सार्धं द्रुपदस्य निवेशने  ॥ ००२  ॥

इन्द्रसेनमुखाश्चेमे रथानादाय केवलान् ।
यान्तु द्वारवतीं शीघ्रमिति मे वर्तते मतिः  ॥ ००३  ॥

इमाश्च नार्यो द्रौपद्याः सर्वशः परिचारिकाः ।
पाञ्चालानेव गच्छन्तु सूदपौरोगवैः सह  ॥ ००४  ॥

सर्वैरपि च वक्तव्यं न प्रज्ञायन्त पाण्डवाः ।
गता ह्यस्मानपाकीर्य सर्वे द्वैतवनादिति  ॥ ००५  ॥

धौम्य उवाच  ॥

विदिते चापि वक्तव्यं सुहृद्भिरनुरागतः ।
अतोऽहमपि वक्ष्यामि हेतुमात्रं निबोधत  ॥ ००६  ॥

हन्तेमां राजवसतिं राजपुत्रा ब्रवीमि वः ।
यथा राजकुलं प्राप्य चरन्प्रेष्यो न रिष्यति  ॥ ००७  ॥

दुर्वसं त्वेव कौरव्या जानता राजवेश्मनि ।
अमानितैः सुमानार्हा अज्ञातैः परिवत्सरम्  ॥ ००८  ॥

दिष्टद्वारो लभेद्द्वारं न च राजसु विश्वसेत् ।
तदेवासनमन्विच्छेद्यत्र नाभिषजेत्परः  ॥ ००९  ॥

नास्य यानं न पर्यङ्कं न पीठं न गजं रथम् ।
आरोहेत्संमतोऽस्मीति स राजवसतिं वसेत्  ॥ ०१०  ॥

अथ यत्रैनमासीनं शङ्केरन्दुष्टचारिणः ।
न तत्रोपविशेज्जातु स राजवसतिं वसेत् ॥ ०११ ॥

न चानुशिष्येद्राजानमपृच्छन्तं कदाचन ।
तूष्णीं त्वेनमुपासीत काले समभिपूजयन् ॥ ०१२ ॥

असूयन्ति हि राजानो जनाननृतवादिनः ।
तथैव चावमन्यन्ते मन्त्रिणं वादिनं मृषा ॥ ०१३ ॥

नैषां दारेषु कुर्वीत मैत्रीं प्राज्ञः कथञ्चन ।
अन्तःपुरचरा ये च द्वेष्टि यानहिताश्च ये ॥ ०१४ ॥

विदिते चास्य कुर्वीत कार्याणि सुलघून्यपि ।
एवं विचरतो राज्ञो न क्षतिर्जायते क्वचित् ॥ ०१५ ॥

यत्नाच्चोपचरेदेनमग्निवद्देववच्च ह ।
अनृतेनोपचीर्णो हि हिंस्यादेनमसंशयम् ॥ ०१६ ॥

यच्च भर्तानुयुञ्जीत तदेवाभ्यनुवर्तयेत् ।
प्रमादमवहेलां च कोपं च परिवर्जयेत् ॥ ०१७ ॥

समर्थनासु सर्वासु हितं च प्रियमेव च ।
संवर्णयेत्तदेवास्य प्रियादपि हितं वदेत् ॥ ०१८ ॥

अनुकूलो भवेच्चास्य सर्वार्थेषु कथासु च ।
अप्रियं चाहितं यत्स्यात्तदस्मै नानुवर्णयेत् ॥ ०१९ ॥

नाहमस्य प्रियोऽस्मीति मत्वा सेवेत पण्डितः ।
अप्रमत्तश्च यत्तश्च हितं कुर्यात्प्रियं च यत् ॥ ०२० ॥

नास्यानिष्टानि सेवेत नाहितैः सह संवसेत् ।

स्वस्थानान्न विकम्पेत स राजवसतिं वसेत्  ॥ ०२१  ॥

दक्षिणं वाथ वामं वा पार्श्वमासीत पण्डितः ।
रक्षिणां ह्यात्तशस्त्राणां स्थानं पश्चाद्विधीयते  ॥ ०२२  ॥

नित्यं विप्रतिषिद्धं तु पुरस्तादासनं महत्  ॥ ०२२  ॥

न च संदर्शने किञ्चित्प्रवृद्धमपि सञ्जपेत् ।
अपि ह्येतद्दरिद्राणां व्यलीकस्थानमुत्तमम्  ॥ ०२३  ॥

न मृषाभिहितं राज्ञो मनुष्येषु प्रकाशयेत् ।
यं चासूयन्ति राजानः पुरुषं न वदेच्च तम्  ॥ ०२४  ॥

शूरोऽस्मीति न दृप्तः स्याद्बुद्धिमानिति वा पुनः ।
प्रियमेवाचरन्राज्ञः प्रियो भवति भोगवान्  ॥ ०२५  ॥

ऐश्वर्यं प्राप्य दुष्प्रापं प्रियं प्राप्य च राजतः ।
अप्रमत्तो भवेद्राज्ञः प्रियेषु च हितेषु च  ॥ ०२६  ॥

यस्य कोपो महाबाधः प्रसादश्च महाफलः ।
कस्तस्य मनसापीच्छेदनर्थं प्राज्ञसंमतः  ॥ ०२७  ॥

न चोष्ठौ निर्भुजेज्जातु न च वाक्यं समाक्षिपेत् ।
सदा क्षुतं च वातं च ष्ठीवनं चाचरेच्छनैः  ॥ ०२८  ॥

हास्यवस्तुषु चाप्यस्य वर्तमानेषु केषुचित् ।
नातिगाढं प्रहृष्येत न चाप्युन्मत्तवद्धसेत्  ॥ ०२९  ॥

न चातिधैर्येण चरेद्गुरुतां हि व्रजेत्तथा ।
स्मितं तु मृदुपूर्वेण दर्शयेत प्रसादजम्  ॥ ०३०  ॥

लाभे न हर्षयेद्यस्तु न व्यथेद्योऽवमानितः ।
असंमूढश्च यो नित्यं स राजवसतिं वसेत्  ॥ ०३१  ॥

राजानं राजपुत्रं वा संवर्तयति यः सदा ।
अमात्यः पण्डितो भूत्वा स चिरं तिष्ठति श्रियम्  ॥ ०३२  ॥

प्रगृहीतश्च योऽमात्यो निगृहीतश्च कारणैः ।
न निर्बध्नाति राजानं लभते प्रग्रहं पुनः  ॥ ०३३  ॥

प्रत्यक्षं च परोक्षं च गुणवादी विचक्षणः ।
उपजीवी भवेद्राज्ञो विषये चापि यो वसेत्  ॥ ०३४  ॥

अमात्यो हि बलाद्भोक्तुं राजानं प्रार्थयेत्तु यः ।
न स तिष्ठेच्चिरं स्थानं गच्छेच्च प्राणसंशयम्  ॥ ०३५  ॥

श्रेयः सदात्मनो दृष्ट्वा परं राज्ञा न संवदेत् ।
विशेषयेन्न राजानं योग्याभूमिषु सर्वदा  ॥ ०३६  ॥

अम्लानो बलवाञ्शूरश्छायेवानपगः सदा ।
सत्यवादी मृदुर्दान्तः स राजवसतिं वसेत्  ॥ ०३७  ॥

अन्यस्मिन्प्रेष्यमाणे तु पुरस्ताद्यः समुत्पतेत् ।
अहं किं करवाणीति स राजवसतिं वसेत्  ॥ ०३८  ॥

उष्णे वा यदि वा शीते रात्रौ वा यदि वा दिवा ।
आदिष्टो न विकल्पेत स राजवसतिं वसेत्  ॥ ०३९  ॥

यो वै गृहेभ्यः प्रवसन्प्रियाणां नानुसंस्मरेत् ।
दुःखेन सुखमन्विच्छेत्स राजवसतिं वसेत्  ॥ ०४०  ॥

समवेषं न कुर्वीत नात्युच्चैः संनिधौ हसेत् ।

मन्त्रं न बहुधा कुर्यादेवं राज्ञः प्रियो भवेत्  ॥ ०४१  ॥

न कर्मणि नियुक्तः सन्धनं किञ्चिदुपस्पृशेत् ।
प्राप्नोति हि हरन्द्रव्यं बन्धनं यदि वा वधम्  ॥ ०४२  ॥

यानं वस्त्रमलङ्कारं यच्चान्यत्संप्रयच्छति ।
तदेव धारयेन्नित्यमेवं प्रियतरो भवेत्  ॥ ०४३  ॥

संवत्सरमिमं तात तथाशीला बुभूषवः ।
अथ स्वविषयं प्राप्य यथाकामं चरिष्यथ  ॥ ०४४  ॥

युधिष्ठिर उवाच  ॥

अनुशिष्टाः स्म भद्रं ते नैतद्वक्तास्ति कश्चन ।
कुन्तीमृते मातरं नो विदुरं च महामतिम्  ॥ ०४५  ॥

यदेवानन्तरं कार्यं तद्भवान्कर्तुमर्हति ।
तारणायास्य दुःखस्य प्रस्थानाय जयाय च  ॥ ०४६  ॥

वैशंपायन उवाच  ॥

एवमुक्तस्ततो राज्ञा धौम्योऽथ द्विजसत्तमः ।
अकरोद्विधिवत्सर्वं प्रस्थाने यद्विधीयते  ॥ ०४७  ॥

तेषां समिध्य तानग्नीन्मन्त्रवच्च जुहाव सः ।
समृद्धिवृद्धिलाभाय पृथिवीविजयाय च  ॥ ०४८  ॥

अग्निं प्रदक्षिणं कृत्वा ब्राह्मणांश्च तपोधनान् ।
याज्ञसेनीं पुरस्कृत्य षडेवाथ प्रवव्रजुः  ॥ ०४९  ॥

# अध्याय ००५

वैशंपायन उवाच ॥

ते वीरा बद्धनिस्त्रिंशास्ततायुधकलापिनः ।
बद्धगोधाङ्गुलित्राणाः कालिन्दीमभितो ययुः ॥ ००१ ॥

ततस्ते दक्षिणं तीरमन्वगच्छन्पदातयः ।
वसन्तो गिरिदुर्गेषु वनदुर्गेषु धन्विनः ॥ ००२ ॥

विध्यन्तो मृगजातानि महेष्वासा महाबलाः ।
उत्तरेण दशार्णांस्ते पाञ्चालान्दक्षिणेन तु ॥ ००३ ॥

अन्तरेण यकृल्लोमाञ्शूरसेनांश्च पाण्डवाः ।
लुब्धा ब्रुवाणा मत्स्यस्य विषयं प्राविशन्वनात् ॥ ००४ ॥

ततो जनपदं प्राप्य कृष्णा राजानमब्रवीत् ।
पश्यैकपद्यो दृश्यन्ते क्षेत्राणि विविधानि च ॥ ००५ ॥

व्यक्तं दूरे विराटस्य राजधानी भविष्यति ।
वसामेह परां रात्रिं बलवान्मे परिश्रमः ॥ ००६ ॥

युधिष्ठिर उवाच ॥

धनञ्जय समुद्यम्य पाञ्चालीं वह भारत ।
राजधान्यां निवत्स्यामो विमुक्ताश्च वनादितः ॥ ००७ ॥

वैशंपायन उवाच ॥

तामादायार्जुनस्तूर्णं द्रौपदीं गजराडिव ।
संप्राप्य नगराभ्याशमवतारयदर्जुनः ॥ ००८ ॥

स राजधानीं संप्राप्य कौन्तेयोऽर्जुनमब्रवीत् ।
क्वायुधानि समासज्य प्रवेक्ष्यामः पुरं वयम् ॥ ००९ ॥

सायुधाश्च वयं तात प्रवेक्ष्यामः पुरं यदि ।
समुद्वेगं जनस्यास्य करिष्यामो न संशयः ॥ ०१० ॥

ततो द्वादश वर्षाणि प्रवेष्टव्यं वनं पुनः ।
एकस्मिन्नपि विज्ञाते प्रतिज्ञातं हि नस्तथा ॥ ०११ ॥

अर्जुन उवाच ॥

इयं कूटे मनुष्येन्द्र गहना महती शमी ।
भीमशाखा दुरारोहा श्मशानस्य समीपतः ॥ ०१२ ॥

न चापि विद्यते कश्चिन्मनुष्य इह पार्थिव ।
उत्पथे हि वने जाता मृगव्यालनिषेविते ॥ ०१३ ॥

समासज्यायुधान्यस्यां गच्छामो नगरं प्रति ।
एवमत्र यथाजोषं विहरिष्याम भारत ॥ ०१४ ॥

वैशंपायन उवाच ॥

एवमुक्त्वा स राजानं धर्मात्मानं युधिष्ठिरम् ।
प्रचक्रमे निधानाय शस्त्राणां भरतर्षभ ॥ ०१५ ॥

येन देवान्मनुष्यांश्च सर्पांश्चैकरथोऽजयत् ।
स्फीताञ्जनपदांश्चान्यानजयत्कुरुनन्दनः ॥ ०१६ ॥

तदुदारं महाघोषं सपत्नगणसूदनम् ।
अपज्यमकरोत्पार्थो गाण्डीवमभयङ्करम्  ॥ ०१७  ॥

येन वीरः कुरुक्षेत्रमभ्यरक्षत्परंतपः ।
अमुञ्चद्धनुषस्तस्य ज्यामक्षय्यां युधिष्ठिरः  ॥ ०१८  ॥

पाञ्चालान्येन सङ्ग्रामे भीमसेनोऽजयत्प्रभुः ।
प्रत्यषेधद्बहूनेकः सपत्नांश्चैव दिग्जये  ॥ ०१९  ॥

निशम्य यस्य विस्फारं व्यद्रवन्त रणे परे ।
पर्वतस्येव दीर्णस्य विस्फोटमशनेरिव  ॥ ०२०  ॥

सैन्धवं येन राजानं परामृषत चानघ ।
ज्यापाशं धनुषस्तस्य भीमसेनोऽवतारयत्  ॥ ०२१  ॥

अजयत्पश्चिमामाशां धनुषा येन पाण्डवः ।
तस्य मौर्वीमपाकर्षच्छूरः सङ्क्रन्दनो युधि  ॥ ०२२  ॥

दक्षिणां दक्षिणाचारो दिशं येनाजयत्प्रभुः ।
अपज्यमकरोद्वीरः सहदेवस्तदायुधम्  ॥ ०२३  ॥

खड्गांश्च पीतान्दीर्घांश्च कलापांश्च महाधनान् ।
विपाठान्क्षुरधारांश्च धनुर्भिर्निदधुः सह  ॥ ०२४  ॥

तामुपारुह्य नकुलो धनूंषि निदधत्स्वयम् ।
यानि तस्यावकाशानि दृढरूपाण्यमन्यत  ॥ ०२५  ॥

यत्र चापश्यत स वै तिरो वर्षाणि वर्षति ।
तत्र तानि दृढैः पाशैः सुगाढं पर्यबन्धत  ॥ ०२६  ॥

शरीरं च मृतस्यैकं समबध्नन्त पाण्डवाः ।

विवर्जयिष्यन्ति नरा दूरादेव शमीमिमाम् ॥ ०२७ ॥

आबद्धं शवमत्रेति गन्धमाघ्राय पूतिकम् ॥ ०२७ ॥

अशीतिशतवर्षेयं माता न इति वादिनः ।
कुलधर्मोऽयमस्माकं पूर्वैराचरितोऽपि च ॥ ०२८ ॥

समासजाना वृक्षेऽस्मिन्निति वै व्याहरन्ति ते ॥ ०२८ ॥

आ गोपालाविपालेभ्य आचक्षाणाः परंतपाः ।
आजग्मुर्नगराभ्याशं पार्थाः शत्रुनिबर्हणाः ॥ ०२९ ॥

जयो जयन्तो विजयो जयत्सेनो जयद्बलः ।
इति गुह्यानि नामानि चक्रे तेषां युधिष्ठिरः ॥ ०३० ॥

ततो यथाप्रतिज्ञाभिः प्राविशन्नगरं महत् ।
अज्ञातचर्यां वत्स्यन्तो राष्ट्रे वर्षं त्रयोदशम् ॥ ०३१ ॥

---

# अध्याय ००६

वैशंपायन उवाच ॥

ततो विराटं प्रथमं युधिष्ठिरो ; राजा सभायामुपविष्टमाव्रजत् ।
वैडूर्यरूपान्प्रतिमुच्य काञ्चना ;नक्षान्स कक्षे परिगृह्य वाससा ॥ ००१ ॥

नराधिपो राष्ट्रपतिं यशस्विनं ; महायशाः कौरववंशवर्धनः ।
महानुभावो नरराजसत्कृतो ; दुरासदस्तीक्ष्णविषो यथोरगः ॥ ००२ ॥

बालेन रूपेण नरर्षभो महा ;नथार्चिरूपेण यथामरस्तथा ।
महाभ्रजालैरिव संवृतो रवि ;र्यथानलो भस्मवृतश्च वीर्यवान् ॥ ००३ ॥

तमापतन्तं प्रसमीक्ष्य पाण्डवं ; विराटराडिन्दुमिवाभ्रसंवृतम् ।
मन्त्रिद्विजान्सूतमुखान्विशस्तथा ; ये चापि केचित्परिषत्समासते ॥ ००४ ॥

पप्रच्छ कोऽयं प्रथमं समेयिवा ;ननेन योऽयं प्रसमीक्षते सभाम् ॥ ००४ ॥

न तु द्विजोऽयं भविता नरोत्तमः ; पतिः पृथिव्या इति मे मनोगतम् ।
न चास्य दासो न रथो न कुण्डले ; समीपतो भ्राजति चायमिन्द्रवत् ॥ ००५ ॥

शरीरलिङ्गैरुपसूचितो ह्ययं ; मूर्धाभिषिक्तोऽयमितीव मानसम् ।
समीपमायाति च मे गतव्यथो ; यथा गजस्तामरसीं मदोत्कटः ॥ ००६ ॥

वितर्कयन्तं तु नरर्षभस्तदा ; युधिष्ठिरोऽभ्येत्य विराटमब्रवीत् ।
सम्राड्विजानात्विह जीवितार्थिनं ; विनष्टसर्वस्वमुपागतं द्विजम् ॥ ००७ ॥

इहाहमिच्छामि तवानघान्तिके ; वस्तुं यथा कामचरस्तथा विभो ।
तमब्रवीत्स्वागतमित्यनन्तरं ; राजा प्रहृष्टः प्रतिसङ्गृहाण च ॥ ००८ ॥

कामेन ताताभिवदाम्यहं त्वां ; कस्यासि राज्ञो विषयादिहागतः ।
गोत्रं च नामापि च शंस तत्त्वतः ; किं चापि शिल्पं तव विद्यते कृतम् ॥ ००९ ॥

युधिष्ठिर उवाच ॥

युधिष्ठिरस्यासमहं पुरा सखा ; वैयाघ्रपद्यः पुनरस्मि ब्राह्मणः ।
अक्षान्प्रवप्तुं कुशलोऽस्मि देविता ; कङ्केति नाम्नास्मि विराट विश्रुतः ॥ ०१० ॥

विराट उवाच ॥

ददामि ते हन्त वरं यमिच्छसि ; प्रशाधि मत्स्यान्वशगो ह्यहं तव ।
प्रिया हि धूर्ता मम देविनः सदा ; भवांश्च देवोपम राज्यमर्हति ॥ ०११ ॥

युधिष्ठिर उवाच ॥

आप्तो विवादः परमो विशां पते ; न विद्यते किञ्चन मत्स्य हीनतः ।
न मे जितः कश्चन धारयेद्धनं ; वरो ममैषोऽस्तु तव प्रसादतः ॥ ०१२ ॥

विराट उवाच ॥

हन्यामवध्यं यदि तेऽप्रियं चरे ;त्प्रव्राजयेयं विषयाद्द्विजांस्तथा ।
शृण्वन्तु मे जानपदाः समागताः ; कङ्को यथाहं विषये प्रभुस्तथा ॥ ०१३ ॥

समानयानो भवितासि मे सखा ; प्रभूतवस्त्रो बहुपानभोजनः ।
पश्येस्त्वमन्तश्च बहिश्च सर्वदा ; कृतं च ते द्वारमपावृतं मया ॥ ०१४ ॥

ये त्वानुवादेयुरवृत्तिकर्शिता ; ब्रूयाश्च तेषां वचनेन मे सदा ।
दास्यामि सर्वं तदहं न संशयो ; न ते भयं विद्यति संनिधौ मम ॥ ०१५ ॥

वैशंपायन उवाच ॥

एवं स लब्ध्वा तु वरं समागमं ; विराटराजेन नरर्षभस्तदा ।
उवास वीरः परमार्चितः सुखी ; न चापि कश्चिच्चरितं बुबोध तत् ॥ ०१६ ॥

---

# अध्याय ००७

वैशंपायन उवाच ॥

अथापरो भीमबलः श्रिया ज्वल ;न्नुपाययौ सिंहविलासविक्रमः ।
खजं च दर्वीं च करेण धारय ;न्नसिं च कालाङ्गमकोशमव्रणम्  ॥ ००१  ॥

स सूदरूपः परमेण वर्चसा ; रविर्यथा लोकमिमं प्रभासयन् ।
सुकृष्णवासा गिरिराजसारवा ;न्स मत्स्यराजं समुपेत्य तस्थिवान्  ॥ ००२  ॥

तं प्रेक्ष्य राजा वरयन्नुपागतं ; ततोऽब्रवीज्जानपदान्समागतान् ।
सिंहोन्नतांसोऽयमतीव रूपवा ;न्प्रदृश्यते को नु नरर्षभो युवा  ॥ ००३  ॥

अदृष्टपूर्वः पुरुषो रविर्यथा ; वितर्कयन्नास्य लभामि संपदम् ।
तथास्य चित्तं ह्यपि संवितर्कय ;न्नरर्षभस्याद्य न यामि तत्त्वतः  ॥ ००४  ॥

ततो विराटं समुपेत्य पाण्डवः ; सुदीनरूपो वचनं महामनाः ।
उवाच सूदोऽस्मि नरेन्द्र बल्लवो ; भजस्व मां व्यञ्जनकारमुत्तमम्  ॥ ००५  ॥

विराट उवाच  ॥

न सूदतां मानद श्रद्दधामि ते ; सहस्रनेत्रप्रतिमो हि दृश्यसे ।
श्रिया च रूपेण च विक्रमेण च ; प्रभासि तातानवरो नरेष्विह  ॥ ००६  ॥

भीम उवाच  ॥

नरेन्द्र सूदः परिचारकोऽस्मि ते ; जानामि सूपान्प्रथमेन केवलान् ।
आस्वादिता ये नृपते पुराभव ;न्युधिष्ठिरेणापि नृपेण सर्वशः  ॥ ००७  ॥

बलेन तुल्यश्च न विद्यते मया ; नियुद्धशीलश्च सदैव पार्थिव ।
गजैश्च सिंहैश्च समेयिवानहं ; सदा करिष्यामि तवानघ प्रियम्  ॥ ००८  ॥

विराट उवाच  ॥

ददामि ते हन्त वरं महानसे ; तथा च कुर्याः कुशलं हि भाषसे ।
न चैव मन्ये तव कर्म तत्समं ; समुद्रनेमिं पृथिवीं त्वमर्हसि ॥ ००९ ॥

यथा हि कामस्तव तत्तथा कृतं ; महानसे त्वं भव मे पुरस्कृतः ।
नराश्च ये तत्र ममोचिताः पुरा ; भवस्व तेषामधिपो मया कृतः ॥ ०१० ॥

वैशंपायन उवाच ॥

तथा स भीमो विहितो महानसे ; विराटराज्ञो दयितोऽभवद्दृढम् ।
उवास राजन्न च तं पृथग्जनो ; बुबोध तत्रानुचरश्च कश्चन ॥ ०११ ॥

---

## अध्याय ००८

वैशंपायन उवाच ॥

ततः केशान्समुत्क्षिप्य वेल्लिताग्राननिन्दितान् ।
जुगूह दक्षिणे पार्श्वे मृदूनसितलोचना ॥ ००१ ॥

वासश्च परिधायैकं कृष्णं सुमलिनं महत् ।
कृत्वा वेषं च सैरन्ध्र्याः कृष्णा व्यचरदार्तवत् ॥ ००२ ॥

तां नराः परिधावन्तीं स्त्रियश्च समुपाद्रवन् ।
अपृच्छंश्चैव तां दृष्ट्वा का त्वं किं च चिकीर्षसि ॥ ००३ ॥

सा तानुवाच राजेन्द्र सैरन्ध्र्यहमुपागता ।
कर्म चेच्छामि वै कर्तुं तस्य यो मां पुपुक्षति ॥ ००४ ॥

तस्या रूपेण वेषेण श्लक्ष्णया च तथा गिरा ।
नाश्रद्दधत तां दासीमन्नहेतोरुपस्थिताम्  ॥ ००५  ॥

विराटस्य तु कैकेयी भार्या परमसंमता ।
अवलोकयन्ती ददृशे प्रासादाद्द्रुपदात्मजाम्  ॥ ००६  ॥

सा समीक्ष्य तथारूपामनाथामेकवाससम् ।
समाहूयाब्रवीद्भद्रे का त्वं किं च चिकीर्षसि  ॥ ००७  ॥

सा तामुवाच राजेन्द्र सैरन्ध्र्यहमुपागता ।
कर्म चेच्छाम्यहं कर्तुं तस्य यो मां पुपुक्षति  ॥ ००८  ॥

सुदेष्णोवाच  ॥

नैवंरूपा भवन्त्येवं यथा वदसि भामिनि ।
प्रेषयन्ति च वै दासीर्दासांश्चैवंविधान्बहून्  ॥ ००९  ॥

गूढगुल्फा संहतोरुस्त्रिगम्भीरा षडुन्नता ।
रक्ता पञ्चसु रक्तेषु हंसगद्गदभाषिणी  ॥ ०१०  ॥

सुकेशी सुस्तनी श्यामा पीनश्रोणिपयोधरा ।
तेन तेनैव संपन्ना काश्मीरीव तुरङ्गमा  ॥ ०११  ॥

स्वरालपक्ष्मनयना बिम्बोष्ठी तनुमध्यमा ।
कम्बुग्रीवा गूढसिरा पूर्णचन्द्रनिभानना  ॥ ०१२  ॥

का त्वं ब्रूहि यथा भद्रे नासि दासी कथञ्चन ।
यक्षी वा यदि वा देवी गन्धर्वी यदि वाप्सराः  ॥ ०१३  ॥

अलम्बुसा मिश्रकेशी पुण्डरीकाथ मालिनी ।
इन्द्राणी वारुणी वा त्वं त्वष्टुर्धातुः प्रजापतेः  ॥ ०१४  ॥

देव्यो देवेषु विख्यातास्तासां त्वं कतमा शुभे ॥ ०१४ ॥

द्रौपद्युवाच ॥

नास्मि देवी न गन्धर्वी नासुरी न च राक्षसी ।
सैरन्ध्री तु भुजिष्यास्मि सत्यमेतद्ब्रवीमि ते ॥ ०१५ ॥

केशाञ्जानाम्यहं कर्तुं पिंषे साधु विलेपनम् ।
ग्रथयिष्ये विचित्राश्च स्रजः परमशोभनाः ॥ ०१६ ॥

आराधयं सत्यभामां कृष्णस्य महिषीं प्रियाम् ।
कृष्णां च भार्यां पाण्डूनां कुरूणामेकसुन्दरीम् ॥ ०१७ ॥

तत्र तत्र चराम्येवं लभमाना सुशोभनम् ।
वासांसि यावच्च लभे तावत्तावद्रमे तथा ॥ ०१८ ॥

मालिनीत्येव मे नाम स्वयं देवी चकार सा ।
साहमभ्यागता देवि सुदेष्णे त्वन्निवेशनम् ॥ ०१९ ॥

सुदेष्णोवाच ॥

मूर्ध्नि त्वां वासयेयं वै संशयो मे न विद्यते ।
नो चेदिह तु राजा त्वां गच्छेत्सर्वेण चेतसा ॥ ०२० ॥

स्त्रियो राजकुले पश्य याश्चेमा मम वेश्मनि ।
प्रसक्तास्त्वां निरीक्षन्ते पुमांसं कं न मोहयेः ॥ ०२१ ॥

वृक्षांश्चावस्थितान्पश्य य इमे मम वेश्मनि ।
तेऽपि त्वां संनमन्तीव पुमांसं कं न मोहयेः ॥ ०२२ ॥

राजा विराटः सुश्रोणि दृष्ट्वा वपुरमानुषम् ।
विहाय मां वरारोहे त्वां गच्छेत्सर्वचेतसा  ॥ ०२३  ॥

यं हि त्वमनवद्याङ्गि नरमायतलोचने ।
प्रसक्तमभिवीक्षेथाः स कामवशगो भवेत्  ॥ ०२४  ॥

यश्च त्वां सततं पश्येत्पुरुषश्चारुहासिनि ।
एवं सर्वानवद्याङ्गि स चानङ्गवशो भवेत्  ॥ ०२५  ॥

यथा कर्कटकी गर्भमाधत्ते मृत्युमात्मनः ।
तथाविधमहं मन्ये वासं तव शुचिस्मिते  ॥ ०२६  ॥

द्रौपद्युवाच  ॥

नास्मि लभ्या विराटेन न चान्येन कथञ्चन ।
गन्धर्वाः पतयो मह्यं युवानः पञ्च भामिनि  ॥ ०२७  ॥

पुत्रा गन्धर्वराजस्य महासत्त्वस्य कस्यचित् ।
रक्षन्ति ते च मां नित्यं दुःखाचारा तथा न्वहम्  ॥ ०२८  ॥

यो मे न दद्यादुच्छिष्टं न च पादौ प्रधावयेत् ।
प्रीयेयुस्तेन वासेन गन्धर्वाः पतयो मम  ॥ ०२९  ॥

यो हि मां पुरुषो गृध्येद्यथान्याः प्राकृतस्त्रियः ।
तामेव स ततो रात्रिं प्रविशेदपरां तनुम्  ॥ ०३०  ॥

न चाप्यहं चालयितुं शक्या केनचिदङ्गने ।
दुःखशीला हि गन्धर्वास्ते च मे बलवत्तराः  ॥ ०३१  ॥

सुदेष्णोवाच  ॥

एवं त्वां वासयिष्यामि यथा त्वं नन्दिनीच्छसि ।
न च पादौ न चोच्छिष्टं स्प्रक्ष्यसि त्वं कथञ्चन ॥ ०३२ ॥

वैशंपायन उवाच ॥

एवं कृष्णा विराटस्य भार्यया परिसान्त्विता ।
न चैनां वेद तत्रान्यस्तत्त्वेन जनमेजय ॥ ०३३ ॥

---

# अध्याय ००९

वैशंपायन उवाच ॥

सहदेवोऽपि गोपानां कृत्वा वेषमनुत्तमम् ।
भाषां चैषां समास्थाय विराटमुपयादथ ॥ ००१ ॥

तमायान्तमभिप्रेक्ष्य भ्राजमानं नरर्षभम् ।
समुपस्थाय वै राजा पप्रच्छ कुरुनन्दनम् ॥ ००२ ॥

कस्य वा त्वं कुतो वा त्वं किं वा तात चिकीर्षसि ।
न हि मे दृष्टपूर्वस्त्वं तत्त्वं ब्रूहि नरर्षभ ॥ ००३ ॥

स प्राप्य राजानममित्रतापन ;स्ततोऽब्रवीन्मेघमहौघनिःस्वनः ।
वैश्योऽस्मि नाम्नाहमरिष्टनेमि ;र्गोसंख्य आसं कुरुपुङ्गवानाम् ॥ ००४ ॥

वस्तुं त्वयीच्छामि विशां वरिष्ठ ; तान्राजसिंहान्न हि वेद्मि पार्थान् ।
न शक्यते जीवितुमन्यकर्मणा ; न च त्वदन्यो मम रोचते नृपः ॥ ००५ ॥

विराट उवाच ॥

त्वं ब्राह्मणो यदि वा क्षत्रियोऽसि ; समुद्रनेमीश्वररूपवानसि ।
आचक्ष्व मे तत्त्वममित्रकर्शन ; न वैश्यकर्म त्वयि विद्यते समम् ॥ ००६ ॥

कस्यासि राज्ञो विषयादिहागतः ; किं चापि शिल्पं तव विद्यते कृतम् ।
कथं त्वमस्मासु निवत्स्यसे सदा ; वदस्व किं चापि तवेह वेतनम् ॥ ००७ ॥

सहदेव उवाच ॥

पञ्चानां पाण्डुपुत्राणां ज्येष्ठो राजा युधिष्ठिरः ।
तस्याष्टशतसाहस्रा गवां वर्गाः शतं शताः ॥ ००८ ॥

अपरे दशसाहस्रा द्विस्तावन्तस्तथापरे ।
तेषां गोसंख्य आसं वै तन्तिपालेति मां विदुः ॥ ००९ ॥

भूतं भव्यं भविष्यच्च यच्च संख्यागतं क्वचित् ।
न मेऽस्त्यविदितं किञ्चित्समन्ताद्दशयोजनम् ॥ ०१० ॥

गुणाः सुविदिता ह्यासन्मम तस्य महात्मनः ।
आसीच्च स मया तुष्टः कुरुराजो युधिष्ठिरः ॥ ०११ ॥

क्षिप्रं हि गावो बहुला भवन्ति ; न तासु रोगो भवतीह कश्चित् ।
तैस्तैरुपायैर्विदितं मयैत ;देतानि शिल्पानि मयि स्थितानि ॥ ०१२ ॥

वृषभांश्चापि जानामि राजन्पूजितलक्षणान् ।
येषां मूत्रमुपाघ्राय अपि वन्ध्या प्रसूयते ॥ ०१३ ॥

विराट उवाच ॥

शतं सहस्राणि समाहितानि ; वर्णस्य वर्णस्य विनिश्चिता गुणैः ।
पशून्सपालान्भवते ददाम्यहं ; त्वदाश्रया मे पशवो भवन्त्विह ॥ ०१४ ॥

वैशंपायन उवाच ॥

तथा स राज्ञोऽविदितो विशां पते ; उवास तत्रैव सुखं नरेश्वरः ।
न चैनमन्येऽपि विदुः कथञ्चन ; प्रादाच्च तस्मै भरणं यथेप्सितम् ॥ ०१५ ॥

---

# अध्याय ०१०

वैशंपायन उवाच ॥

अथापरोऽदृश्यत रूपसंपदा ; स्त्रीणामलङ्कारधरो बृहत्पुमान् ।
प्राकारवप्रे प्रतिमुच्य कुण्डले ; दीर्घे च कम्बू परिहाटके शुभे ॥ ००१ ॥

बहूंश्च दीर्घांश्च विकीर्य मूर्धजा ;न्महाभुजो वारणमत्तविक्रमः ।
गतेन भूमिमभिकम्पयंस्तदा ; विराटमासाद्य सभासमीपतः ॥ ००२ ॥

तं प्रेक्ष्य राजोपगतं सभातले ; सत्रप्रतिच्छन्नमरिप्रमाथिनम् ।
विराजमानं परमेण वर्चसा ; सुतं महेन्द्रस्य गजेन्द्रविक्रमम् ॥ ००३ ॥

सर्वानपृच्छच्च समीपचारिणः ; कुतोऽयमायाति न मे पुरा श्रुतः ।
न चैनमूचुर्विदितं तदा नराः ; सविस्मितं वाक्यमिदं नृपोऽब्रवीत् ॥ ००४ ॥

सर्वोपपन्नः पुरुषो मनोरमः ; श्यामो युवा वारणयूथपोपमः ।
विमुच्य कम्बू परिहाटके शुभे ; विमुच्य वेणीमपिनह्य कुण्डले ॥ ००५ ॥

शिखी सुकेशः परिधाय चान्यथा ; भवस्व धन्वी कवची शरी तथा ।
आरुह्य यानं परिधावतां भवा ;न्सुतैः समो मे भव वा मया समः ॥ ००६ ॥

वृद्धो ह्यहं वै परिहारकामः ; सर्वान्मत्स्यांस्तरसा पालयस्व ।
नैवंविधाः क्लीबरूपा भवन्ति ; कथञ्चनेति प्रतिभाति मे मनः ॥ ००७ ॥

अर्जुन उवाच ॥

गायामि नृत्याम्यथ वादयामि ; भद्रोऽस्मि नृत्ते कुशलोऽस्मि गीते ।
त्वमुत्तरायाः परिदत्स्व मां स्वयं ; भवामि देव्या नरदेव नर्तकः ॥ ००८ ॥

इदं तु रूपं मम येन किं नु त ;त्प्रकीर्तयित्वा भृशशोकवर्धनम् ।
बृहन्नडां वै नरदेव विद्धि मां ; सुतं सुतां वा पितृमातृवर्जिताम् ॥ ००९ ॥

विराट उवाच ॥

ददामि ते हन्त वरं बृहन्नडे ; सुतां च मे नर्तय याश्च तादृशीः ।
इदं तु ते कर्म समं न मे मतं ; समुद्रनेमिं पृथिवीं त्वमर्हसि ॥ ०१० ॥

वैशंपायन उवाच ॥

बृहन्नडां तामभिवीक्ष्य मत्स्यरा ;ड्कलासु नृत्ते च तथैव वादिते ।
अपुंस्त्वमप्यस्य निशम्य च स्थिरं ; ततः कुमारीपुरमुत्ससर्ज तम् ॥ ०११ ॥

स शिक्षयामास च गीतवादितं ; सुतां विराटस्य धनञ्जयः प्रभुः ।
सखीश्च तस्याः परिचारिकास्तथा ; प्रियश्च तासां स बभूव पाण्डवः ॥ ०१२ ॥

तथा स सत्रेण धनञ्जयोऽवस ;त्प्रियाणि कुर्वन्सह ताभिरात्मवान् ।
तथागतं तत्र न जज्ञिरे जना ; बहिश्चरा वाप्यथवान्तरेचराः ॥ ०१३ ॥

---

# अध्याय ०११

वैशंपायन उवाच ॥

अथापरोऽदृश्यत पाण्डवः प्रभु ;र्विराटराज्ञस्तुरगान्समीक्षतः ।
तमापतन्तं ददृशे पृथग्जनो ; विमुक्तमभ्रादिव सूर्यमण्डलम् ॥ ००१ ॥

स वै हयानैक्षत तांस्ततस्ततः ; समीक्षमाणं च ददर्श मत्स्यराट् ।
ततोऽब्रवीत्ताननुगानमित्रहा ; कुतोऽयमायाति नरोऽमरप्रभः ॥ ००२ ॥

अयं हयान्वीक्षति मामकान्दृढं ; ध्रुवं हयज्ञो भविता विचक्षणः ।
प्रवेश्यतामेष समीपमाशु मे ; विभाति वीरो हि यथामरस्तथा ॥ ००३ ॥

अभ्येत्य राजानममित्रहाब्रवी ;ज्जयोऽस्तु ते पार्थिव भद्रमस्तु च ।
हयेषु युक्तो नृप संमतः सदा ; तवाश्वसूतो निपुणो भवाम्यहम् ॥ ००४ ॥

विराट उवाच ॥

ददामि यानानि धनं निवेशनं ; ममाश्वसूतो भवितुं त्वमर्हसि ।
कुतोऽसि कस्यासि कथं त्वमागतः ; प्रब्रूहि शिल्पं तव विद्यते च यत् ॥ ००५ ॥

नकुल उवाच ॥

पञ्चानां पाण्डुपुत्राणां ज्येष्ठो राजा युधिष्ठिरः ।
तेनाहमश्वेषु पुरा प्रकृतः शत्रुकर्शन ॥ ००६ ॥

अश्वानां प्रकृतिं वेद्मि विनयं चापि सर्वशः ।
दुष्टानां प्रतिपत्तिं च कृत्स्नं चैव चिकित्सितम् ॥ ००७ ॥

न कातरं स्यान्मम जातु वाहनं ; न मेऽस्ति दुष्टा वडवा कुतो हयाः ।

जनस्तु मामाह स चापि पाण्डवो ; युधिष्ठिरो ग्रन्थिकमेव नामतः ॥ ००८ ॥

विराट उवाच ॥

यदस्ति किञ्चिन्मम वाजिवाहनं ; तदस्तु सर्वं त्वदधीनमद्य वै ।
ये चापि केचिन्मम वाजियोजका ;स्त्वदाश्रयाः सारथयश्च सन्तु मे ॥ ००९ ॥

इदं तवेष्टं यदि वै सुरोपम ; ब्रवीहि यत्ते प्रसमीक्षितं वसु ।
न तेऽनुरूपं हयकर्म विद्यते ; प्रभासि राजेव हि संमतो मम ॥ ०१० ॥

युधिष्ठिरस्येव हि दर्शनेन मे ; समं तवेदं प्रियदर्श दर्शनम् ।
कथं तु भृत्यैः स विनाकृतो वने ; वसत्यनिन्द्यो रमते च पाण्डवः ॥ ०११ ॥

वैशंपायन उवाच ॥

तथा स गन्धर्ववरोपमो युवा ; विराटराज्ञा मुदितेन पूजितः ।
न चैनमन्येऽपि विदुः कथञ्चन ; प्रियाभिरामं विचरन्तमन्तरा ॥ ०१२ ॥

एवं हि मत्स्ये न्यवसन्त पाण्डवा ; यथाप्रतिज्ञाभिरमोघदर्शनाः ।
अज्ञातचर्यां व्यचरन्समाहिताः ; समुद्रनेमीपतयोऽतिदुःखिताः ॥ ०१३ ॥

---

# अध्याय ०१२

जनमेजय उवाच ॥

एवं मत्स्यस्य नगरे वसन्तस्तत्र पाण्डवाः ।
अत ऊर्ध्वं महावीर्याः किमकुर्वन्त वै द्विज ॥ ००१ ॥

वैशंपायन उवाच ॥

एवं ते न्यवसंस्तत्र प्रच्छन्नाः कुरुनन्दनाः ।
आराधयन्तो राजानं यदकुर्वन्त तच्छृणु ॥ ००२ ॥

युधिष्ठिरः सभास्तारः सभ्यानामभवत्प्रियः ।
तथैव च विराटस्य सपुत्रस्य विशां पते ॥ ००३ ॥

स ह्यक्षहृदयज्ञस्तान्क्रीडयामास पाण्डवः ।
अक्षवत्यां यथाकामं सूत्रबद्धानिव द्विजान् ॥ ००४ ॥

अज्ञातं च विराटस्य विजित्य वसु धर्मराट् ।
भ्रातृभ्यः पुरुषव्याघ्रो यथार्हं स्म प्रयच्छति ॥ ००५ ॥

भीमसेनोऽपि मांसानि भक्ष्याणि विविधानि च ।
अतिसृष्टानि मत्स्येन विक्रीणाति युधिष्ठिरे ॥ ००६ ॥

वासांसि परिजीर्णानि लब्धान्यन्तःपुरेऽर्जुनः ।
विक्रीणानश्च सर्वेभ्यः पाण्डवेभ्यः प्रयच्छति ॥ ००७ ॥

सहदेवोऽपि गोपानां वेषमास्थाय पाण्डवः ।
दधि क्षीरं घृतं चैव पाण्डवेभ्यः प्रयच्छति ॥ ००८ ॥

नकुलोऽपि धनं लब्ध्वा कृते कर्मणि वाजिनाम् ।
तुष्टे तस्मिन्नरपतौ पाण्डवेभ्यः प्रयच्छति ॥ ००९ ॥

कृष्णापि सर्वान्भ्रातृंस्तान्निरीक्षन्ती तपस्विनी ।
यथा पुनरविज्ञाता तथा चरति भामिनी ॥ ०१० ॥

एवं संपादयन्तस्ते तथान्योन्यं महारथाः ।
प्रेक्षमाणास्तदा कृष्णामूषुश्छन्ना नराधिप ॥ ०११ ॥

अथ मासे चतुर्थे तु ब्रह्मणः सुमहोत्सवः ।
आसीत्समृद्धो मत्स्येषु पुरुषाणां सुसंमतः ॥ ०१२ ॥

तत्र मल्लाः समापेतुर्दिग्भ्यो राजन्सहस्रशः ।
महाकाया महावीर्याः कालखञ्जा इवासुराः ॥ ०१३ ॥

वीर्योन्नद्धा बलोदग्रा राज्ञा समभिपूजिताः ।
सिंहस्कन्धकटिग्रीवाः स्ववदाता मनस्विनः ॥ ०१४ ॥

असकृल्लब्धलक्षास्ते रङ्गे पार्थिवसंनिधौ ॥ ०१४ ॥

तेषामेको महानासीत्सर्वमल्लान्समाह्वयत् ।
आवल्गमानं तं रङ्गे नोपतिष्ठति कश्चन ॥ ०१५ ॥

यदा सर्वे विमनसस्ते मल्ला हतचेतसः ।
अथ सूदेन तं मल्लं योधयामास मत्स्यराट् ॥ ०१६ ॥

चोद्यमानस्ततो भीमो दुःखेनैवाकरोन्मतिम् ।
न हि शक्नोति विवृते प्रत्याख्यातुं नराधिपम् ॥ ०१७ ॥

ततः स पुरुषव्याघ्रः शार्दूलशिथिलं चरन् ।
प्रविवेश महारङ्गं विराटमभिहर्षयन् ॥ ०१८ ॥

बबन्ध कक्ष्यां कौन्तेयस्ततस्तं हर्षयञ्जनम् ।
ततस्तं वृत्रसङ्काशं भीमो मल्लं समाह्वयत् ॥ ०१९ ॥

तावुभौ सुमहोत्साहावुभौ तीव्रपराक्रमौ ।
मत्ताविव महाकायौ वारणौ षष्टिहायनौ ॥ ०२० ॥

चकर्ष दोर्भ्यामुत्पाट्य भीमो मल्लममित्रहा ।

विनदन्तमभिक्रोशञ्शार्दूल इव वारणम्  ॥ ०२१  ॥

तमुद्यम्य महाबाहुर्भ्रामयामास वीर्यवान् ।
ततो मल्लाश्च मत्स्याश्च विस्मयं चक्रिरे परम्  ॥ ०२२  ॥

भ्रामयित्वा शतगुणं गतसत्त्वमचेतनम् ।
प्रत्यपिंषन्महाबाहुर्मल्लं भुवि वृकोदरः  ॥ ०२३  ॥

तस्मिन्विनिहते मल्ले जीमूते लोकविश्रुते ।
विराटः परमं हर्षमगच्छद्बान्धवैः सह  ॥ ०२४  ॥

संहर्षात्प्रददौ वित्तं बहु राजा महामनाः ।
बल्लवाय महारङ्गे यथा वैश्रवणस्तथा  ॥ ०२५  ॥

एवं स सुबहून्मल्लान्पुरुषांश्च महाबलान् ।
विनिघ्नन्मत्स्यराजस्य प्रीतिमावहदुत्तमाम्  ॥ ०२६  ॥

यदास्य तुल्यः पुरुषो न कश्चित्तत्र विद्यते ।
ततो व्याघ्रैश्च सिंहैश्च द्विरदैश्चाप्ययोधयत्  ॥ ०२७  ॥

पुनरन्तःपुरगतः स्त्रीणां मध्ये वृकोदरः ।
योध्यते स्म विराटेन सिंहैर्मत्तैर्महाबलैः  ॥ ०२८  ॥

बीभत्सुरपि गीतेन सुनृत्तेन च पाण्डवः ।
विराटं तोषयामास सर्वाश्चान्तःपुरस्त्रियः  ॥ ०२९  ॥

अश्वैर्विनीतैर्जवनैस्तत्र तत्र समागतैः ।
तोषयामास नकुलो राजानं राजसत्तम  ॥ ०३०  ॥

तस्मै प्रदेयं प्रायच्छत्प्रीतो राजा धनं बहु ।
विनीतान्वृषभान्दृष्ट्वा सहदेवस्य चाभिभो  ॥ ०३१  ॥

एवं ते न्यवसंस्तत्र प्रच्छन्नाः पुरुषर्षभाः ।
कर्माणि तस्य कुर्वाणा विराटनृपतेस्तदा ॥ ०३२ ॥

---

# कीचकवधपर्व

## अध्याय ०१३

वैशंपायन उवाच ॥

वसमानेषु पार्थेषु मत्स्यस्य नगरे तदा ।
महारथेषु छन्नेषु मासा दश समत्ययुः ॥ ००१ ॥

याज्ञसेनी सुदेष्णां तु शुश्रूषन्ती विशां पते ।
अवसत्परिचारार्हा सुदुःखं जनमेजय ॥ ००२ ॥

तथा चरन्तीं पाञ्चालीं सुदेष्णाया निवेशने ।
सेनापतिर्विराटस्य ददर्श जलजाननाम् ॥ ००३ ॥

तां दृष्ट्वा देवगर्भाभां चरन्तीं देवतामिव ।
कीचकः कामयामास कामबाणप्रपीडितः ॥ ००४ ॥

स तु कामाग्निसंतप्तः सुदेष्णामभिगम्य वै ।
प्रहसन्निव सेनानीरिदं वचनमब्रवीत् ॥ ००५ ॥

नेयं पुरा जातु मयेह दृष्टा ; राज्ञो विराटस्य निवेशने शुभा ।
रूपेण चोन्मादयतीव मां भृशं ; गन्धेन जाता मदिरेव भामिनी ॥ ००६ ॥

का देवरूपा हृदयङ्गमा शुभे ; आचक्ष्व मे का च कुतश्च शोभना ।
चित्तं हि निर्मथ्य करोति मां वशे ; न चान्यदत्रौषधमद्य मे मतम् ॥ ००७ ॥

अहो तवेयं परिचारिका शुभा ; प्रत्यग्ररूपा प्रतिभाति मामियम् ।
अयुक्तरूपं हि करोति कर्म ते ; प्रशास्तु मां यच्च ममास्ति किञ्चन ॥ ००८ ॥

प्रभूतनागाश्वरथं महाधनं ; समृद्धियुक्तं बहुपानभोजनम् ।
मनोहरं काञ्चनचित्रभूषणं ; गृहं महच्छोभयतामियं मम ॥ ००९ ॥

ततः सुदेष्णामनुमन्त्र्य कीचक ;स्ततः समभ्येत्य नराधिपात्मजाम् ।
उवाच कृष्णामभिसान्त्वयंस्तदा ; मृगेन्द्रकन्यामिव जम्बुको वने ॥ ०१० ॥

इदं च रूपं प्रथमं च ते वयो ; निरर्थकं केवलमद्य भामिनि ।
अधार्यमाणा स्रगिवोत्तमा यथा ; न शोभसे सुन्दरि शोभना सती ॥ ०११ ॥

त्यजामि दारान्मम ये पुरातना ; भवन्तु दास्यस्तव चारुहासिनि ।
अहं च ते सुन्दरि दासवत्स्थितः ; सदा भविष्ये वशगो वरानने ॥ ०१२ ॥

द्रौपद्युवाच ॥

अप्रार्थनीयामिह मां सूतपुत्राभिमन्यसे ।
विहीनवर्णां सैरन्ध्रीं बीभत्सां केशकारिकाम् ॥ ०१३ ॥

परदारास्मि भद्रं ते न युक्तं त्वयि सांप्रतम् ।
दयिताः प्राणिनां दारा धर्मं समनुचिन्तय ॥ ०१४ ॥

परदारे न ते बुद्धिर्जातु कार्या कथञ्चन ।
विवर्जनं ह्यकार्याणामेतत्सत्पुरुषव्रतम् ॥ ०१५ ॥

मिथ्याभिगृध्नो हि नरः पापात्मा मोहमास्थितः ।

अयशः प्राप्नुयाद्धोरं सुमहत्प्राप्नुयाद्भयम् ॥ ०१६ ॥

मा सूतपुत्र हृष्यस्व माद्य त्यक्ष्यसि जीवितम् ।
दुर्लभामभिमन्वानो मां वीरैरभिरक्षिताम् ॥ ०१७ ॥

न चाप्यहं त्वया शक्या गन्धर्वाः पतयो मम ।
ते त्वां निहन्युः कुपिताः साध्वलं मा व्यनीनशः ॥ ०१८ ॥

अशक्यरूपैः पुरुषैरध्वानं गन्तुमिच्छसि ।
यथा निश्चेतनो बालः कूलस्थः कूलमुत्तरम् ॥ ०१९ ॥

तर्तुमिच्छति मन्दात्मा तथा त्वं कर्तुमिच्छसि ॥ ०१९ ॥

अन्तर्महीं वा यदि वोर्ध्वमुत्पतेः ; समुद्रपारं यदि वा प्रधावसि ।
तथापि तेषां न विमोक्षमर्हसि ; प्रमाथिनो देवसुता हि मे वराः ॥ ०२० ॥

त्वं कालरात्रीमिव कश्चिदातुरः ; किं मां दृढं प्रार्थयसेऽद्य कीचक ।
किं मातुरङ्के शयितो यथा शिशु ;श्चन्द्रं जिघृक्षुरिव मन्यसे हि माम् ॥ ०२१ ॥

---

# अध्याय ०१४

वैशंपायन उवाच ॥

प्रत्याख्यातो राजपुत्र्या सुदेष्णां कीचकोऽब्रवीत् ।
अमर्यादेन कामेन घोरेणाभिपरिप्लुतः ॥ ००१ ॥

यथा कैकेयि सैरन्ध्र्या समेयां तद्विधीयताम् ।
तां सुदेष्णे परीप्सस्व माहं प्राणान्प्रहासिषम् ॥ ००२ ॥

तस्य तां बहुशः श्रुत्वा वाचं विलपतस्तदा ।
विराटमहिषी देवी कृपां चक्रे मनस्विनी ॥ ००३ ॥

स्वमर्थमभिसंधाय तस्यार्थमनुचिन्त्य च ।
उद्वेगं चैव कृष्णायाः सुदेष्णा सूतमब्रवीत् ॥ ००४ ॥

पर्विणीं त्वं समुद्दिष्य सुरामन्नं च कारय ।
तत्रैनां प्रेषयिष्यामि सुराहारीं तवान्तिकम् ॥ ००५ ॥

तत्र संप्रेषितामेनां विजने निरवग्रहाम् ।
सान्त्वयेथा यथाकामं सान्त्व्यमाना रमेद्यदि ॥ ००६ ॥

कीचकस्तु गृहं गत्वा भगिन्या वचनात्तदा ।
सुरामाहारयामास राजार्हां सुपरिस्रुताम् ॥ ००७ ॥

आजौरभ्रं च सुभृशं बहूंश्चोच्चावचान्मृगान् ।
कारयामास कुशलैरन्नपानं सुशोभनम् ॥ ००८ ॥

तस्मिन्कृते तदा देवी कीचकेनोपमन्त्रिता ।
सुदेष्णा प्रेषयामास सैरन्ध्रीं कीचकालयम् ॥ ००९ ॥

सुदेष्णोवाच ॥

उत्तिष्ठ गच्छ सैरन्ध्रि कीचकस्य निवेशनम् ।
पानमानय कल्याणि पिपासा मां प्रबाधते ॥ ०१० ॥

द्रौपद्युवाच ॥

न गच्छेयमहं तस्य राजपुत्रि निवेशनम् ।
त्वमेव राज्ञि जानासि यथा स निरपत्रपः ॥ ०११ ॥

न चाहमनवद्याङ्गि तव वेश्मनि भामिनि ।
कामवृत्ता भविष्यामि पतीनां व्यभिचारिणी ॥ ०१२ ॥

त्वं चैव देवि जानासि यथा स समयः कृतः ।
प्रविशन्त्या मया पूर्वं तव वेश्मनि भामिनि ॥ ०१३ ॥

कीचकश्च सुकेशान्ते मूढो मदनदर्पितः ।
सोऽवमंस्यति मां दृष्ट्वा न यास्ये तत्र शोभने ॥ ०१४ ॥

सन्ति बह्व्यस्तव प्रेष्या राजपुत्रि वशानुगाः ।
अन्यां प्रेषय भद्रं ते स हि मामवमंस्यते ॥ ०१५ ॥

सुदेष्णोवाच ॥

नैव त्वां जातु हिंस्यात्स इतः संप्रेषितां मया ।
वैशंपायन उवाच ॥

इत्यस्याः प्रददौ कांस्यं सपिधानं हिरण्मयम् ।
सा शङ्कमाना रुदती दैवं शरणमीयुषी ॥ ०१७ ॥

प्रातिष्ठत सुराहारी कीचकस्य निवेशनम् ॥ ०१७ ॥

द्रौपद्युवाच ॥

यथाहमन्यं पाण्डुभ्यो नाभिजानामि कञ्चन ।
तेन सत्येन मां प्राप्तां कीचको मा वशे कृथाः ॥ ०१८ ॥

वैशंपायन उवाच ॥

उपातिष्ठत सा सूर्यं मुहूर्तमबला ततः ।

स तस्यास्तनुमध्यायाः सर्वं सूर्योऽवबुद्धवान्  ॥ ०१९  ॥

अन्तर्हितं ततस्तस्या रक्षो रक्षार्थमादिशत् ।
तच्चैनां नाजहात्तत्र सर्वावस्थास्वनिन्दिताम्  ॥ ०२०  ॥

तां मृगीमिव वित्रस्तां दृष्ट्वा कृष्णां समीपगाम् ।
उदतिष्ठन्मुदा सूतो नावं लब्ध्वेव पारगः  ॥ ०२१  ॥

---

# अध्याय ०१५

कीचक उवाच  ॥

स्वागतं ते सुकेशान्ते सुव्युष्टा रजनी मम ।
स्वामिनी त्वमनुप्राप्ता प्रकुरुष्व मम प्रियम्  ॥ ००१  ॥

सुवर्णमालाः कम्बूश्च कुण्डले परिहाटके ।
आहरन्तु च वस्त्राणि कौशिकान्यजिनानि च  ॥ ००२  ॥

अस्ति मे शयनं शुभ्रं त्वदर्थमुपकल्पितम् ।
एहि तत्र मया सार्धं पिबस्व मधुमाधवीम्  ॥ ००३  ॥

द्रौपद्युवाच  ॥

अप्रैषीद्राजपुत्री मां सुराहारीं तवान्तिकम् ।
पानमानय मे क्षिप्रं पिपासा मेति चाब्रवीत्  ॥ ००४  ॥

कीचक उवाच  ॥

अन्या भद्रे नयिष्यन्ति राजपुत्र्याः परिस्रुतम् ।
वैशंपायन उवाच ॥

इत्येनां दक्षिणे पाणौ सूतपुत्रः परामृशत् ।
सा गृहीता विधुन्वाना भूमावाक्षिप्य कीचकम् ॥ ००६ ॥

सभां शरणमाधावद्यत्र राजा युधिष्ठिरः ॥ ००६ ॥

तां कीचकः प्रधावन्तीं केशपक्षे परामृशत् ।
अथैनां पश्यतो राज्ञः पातयित्वा पदावधीत् ॥ ००७ ॥

ततो योऽसौ तदार्केण राक्षसः संनियोजितः ।
स कीचकमपोवाह वातवेगेन भारत ॥ ००८ ॥

स पपात ततो भूमौ रक्षोबलसमाहतः ।
विघूर्णमानो निश्चेष्टश्छिन्नमूल इव द्रुमः ॥ ००९ ॥

तां चासीनौ ददृशतुर्भीमसेनयुधिष्ठिरौ ।
अमृष्यमाणौ कृष्णायाः कीचकेन पदा वधम् ॥ ०१० ॥

तस्य भीमो वधप्रेप्सुः कीचकस्य दुरात्मनः ।
दन्तैर्दन्तांस्तदा रोषान्निष्पिपेष महामनाः ॥ ०११ ॥

अथाङ्गुष्ठेनावमृद्नादङ्गुष्ठं तस्य धर्मराट् ।
प्रबोधनभयाद्राजन्भीमस्य प्रत्यषेधयत् ॥ ०१२ ॥

सा सभाद्वारमासाद्य रुदती मत्स्यमब्रवीत् ।
अवेक्षमाणा सुश्रोणी पतींस्तान्दीनचेतसः ॥ ०१३ ॥

आकारमभिरक्षन्ती प्रतिज्ञां धर्मसंहिताम् ।
दह्यमानेव रौद्रेण चक्षुषा द्रुपदात्मजा ॥ ०१४ ॥

द्रौपद्युवाच ॥

येषां वैरी न स्वपिति पदा भूमिमुपस्पृशन् ।
तेषां मां मानिनीं भार्यां सूतपुत्रः पदावधीत् ॥ ०१५ ॥

ये दद्युर्न च याचेयुर्ब्रह्मण्याः सत्यवादिनः ।
तेषां मां मानिनीं भार्यां सूतपुत्रः पदावधीत् ॥ ०१६ ॥

येषां दुन्दुभिनिर्घोषो ज्याघोषः श्रूयतेऽनिशम् ।
तेषां मां मानिनीं भार्यां सूतपुत्रः पदावधीत् ॥ ०१७ ॥

ये ते तेजस्विनो दान्ता बलवन्तोऽभिमानिनः ।
तेषां मां मानिनीं भार्यां सूतपुत्रः पदावधीत् ॥ ०१८ ॥

सर्वलोकमिमं हन्युर्धर्मपाशसितास्तु ये ।
तेषां मां मानिनीं भार्यां सूतपुत्रः पदावधीत् ॥ ०१९ ॥

शरणं ये प्रपन्नानां भवन्ति शरणार्थिनाम् ।
चरन्ति लोके प्रच्छन्नाः क्व नु तेऽद्य महारथाः ॥ ०२० ॥

कथं ते सूतपुत्रेण वध्यमानां प्रियां सतीम् ।
मर्षयन्ति यथा क्लीबा बलवन्तोऽमितौजसः ॥ ०२१ ॥

क्व नु तेषाममर्षश्च वीर्यं तेजश्च वर्तते ।
न परीप्सन्ति ये भार्यां वध्यमानां दुरात्मना ॥ ०२२ ॥

मयात्र शक्यं किं कर्तुं विराटे धर्मदूषणम् ।
यः पश्यन्मां मर्षयति वध्यमानामनागसम् ॥ ०२३ ॥

न राजन्राजवत्किञ्चित्समाचरसि कीचके ।

दस्यूनामिव धर्मस्ते न हि संसदि शोभते ॥ ०२४ ॥

न कीचकः स्वधर्मस्थो न च मत्स्यः कथञ्चन ।
सभासदोऽप्यधर्मज्ञा य इमं पर्युपासते ॥ ०२५ ॥

नोपालभे त्वां नृपते विराट जनसंसदि ।
नाहमेतेन युक्ता वै हन्तुं मत्स्य तवान्तिके ॥ ०२६ ॥

सभासदस्तु पश्यन्तु कीचकस्य व्यतिक्रमम् ॥ ०२६ ॥

विराट उवाच ॥

परोक्षं नाभिजानामि विग्रहं युवयोरहम् ।
अर्थतत्त्वमविज्ञाय किं नु स्यात्कुशलं मम ॥ ०२७ ॥

वैशंपायन उवाच ॥

ततस्तु सभ्या विज्ञाय कृष्णां भूयोऽभ्यपूजयन् ।
साधु साध्विति चाप्याहुः कीचकं च व्यगर्हयन् ॥ ०२८ ॥

सभ्या ऊचुः ॥

यस्येयं चारुसर्वाङ्गी भार्या स्यादायतेक्षणा ।
परो लाभश्च तस्य स्यान्न स शोचेत्कदाचन ॥ ०२९ ॥

वैशंपायन उवाच ॥

एवं संपूजयंस्तत्र कृष्णां प्रेक्ष्य सभासदः ।
युधिष्ठिरस्य कोपात्तु ललाटे स्वेद आसजत् ॥ ०३० ॥

अथाब्रवीद्राजपुत्रीं कौरव्यो महिषीं प्रियाम् ।

गच्छ सैरन्ध्रि मात्र स्थाः सुदेष्णाया निवेशनम् ॥ ०३१ ॥

भर्तारमनुरुध्यन्त्यः क्लिश्यन्ते वीरपत्नयः ।
शुश्रूषया क्लिश्यमानाः पतिलोकं जयन्त्युत ॥ ०३२ ॥

मन्ये न कालं क्रोधस्य पश्यन्ति पतयस्तव ।
तेन त्वां नाभिधावन्ति गन्धर्वाः सूर्यवर्चसः ॥ ०३३ ॥

अकालज्ञासि सैरन्ध्रि शैलूषीव विधावसि ।
विघ्नं करोषि मत्स्यानां दीव्यतां राजसंसदि ॥ ०३४ ॥

गच्छ सैरन्ध्रि गन्धर्वाः करिष्यन्ति तव प्रियम् ॥ ०३४ ॥

द्रौपद्युवाच ॥

अतीव तेषां घृणिनामर्थेऽहं धर्मचारिणी ।
तस्य तस्येह ते वध्या येषां ज्येष्ठोऽक्षदेविता ॥ ०३५ ॥

वैशंपायन उवाच ॥

इत्युक्त्वा प्राद्रवत्कृष्णा सुदेष्णाया निवेशनम् ।
केशान्मुक्त्वा तु सुश्रोणी संरम्भाल्लोहितेक्षणा ॥ ०३६ ॥

शुशुभे वदनं तस्या रुदन्त्या विरतं तदा ।
मेघलेखाविनिर्मुक्तं दिवीव शशिमण्डलम् ॥ ०३७ ॥

सुदेष्णोवाच ॥

कस्त्वावधीद्वरारोहे कस्माद्रोदिषि शोभने ।
कस्याद्य न सुखं भद्रे केन ते विप्रियं कृतम् ॥ ०३८ ॥

द्रौपद्युवाच ॥

कीचको मावधीत्तत्र सुराहारीं गतां तव ।
सभायां पश्यतो राज्ञो यथैव विजने तथा ॥ ०३९ ॥

सुदेष्णोवाच ॥

घातयामि सुकेशान्ते कीचकं यदि मन्यसे ।
योऽसौ त्वां कामसंमत्तो दुर्लभामभिमन्यते ॥ ०४० ॥

द्रौपद्युवाच ॥

अन्ये वै तं वधिष्यन्ति येषामागः करोति सः ।
मन्ये चाद्यैव सुव्यक्तं परलोकं गमिष्यति ॥ ०४१ ॥

---

# अध्याय ०१६

वैशंपायन उवाच ॥

सा हता सूतपुत्रेण राजपुत्री समज्वलत् ।
वधं कृष्णा परीप्सन्ती सेनावाहस्य भामिनी ॥ ००१ ॥

जगामावासमेवाथ तदा सा द्रुपदात्मजा ॥ ००१ ॥

कृत्वा शौचं यथान्यायं कृष्णा वै तनुमध्यमा ।
गात्राणि वाससी चैव प्रक्षाल्य सलिलेन सा ॥ ००२ ॥

चिन्तयामास रुदती तस्य दुःखस्य निर्णयम् ।

किं करोमि क्व गच्छामि कथं कार्यं भवेन्मम ॥ ००३ ॥

इत्येवं चिन्तयित्वा सा भीमं वै मनसागमत् ।
नान्यः कर्ता ऋते भीमान्ममाद्य मनसः प्रियम् ॥ ००४ ॥

तत उत्थाय रात्रौ सा विहाय शयनं स्वकम् ।
प्राद्रवन्नाथमिच्छन्ती कृष्णा नाथवती सती ॥ ००५ ॥

दुःखेन महता युक्ता मानसेन मनस्विनी ॥ ००५ ॥

सा वै महानसे प्राप्य भीमसेनं शुचिस्मिता ।
सर्वश्वेतेव माहेयी वने जाता त्रिहायनी ॥ ००६ ॥

उपातिष्ठत पाञ्चाली वाशितेव महागजम् ॥ ००६ ॥

सा लतेव महाशालं फुल्लं गोमतितीरजम् ।
बाहुभ्यां परिरभ्यैनं प्राबोधयदनिन्दिता ॥ ००७ ॥

सिंहं सुप्तं वने दुर्गे मृगराजवधूरिव ॥ ००७ ॥

वीणेव मधुराभाषा गान्धारं साधु मूर्च्छिता ।
अभ्यभाषत पाञ्चाली भीमसेनमनिन्दिता ॥ ००८ ॥

उत्तिष्ठोत्तिष्ठ किं शेषे भीमसेन यथा मृतः ।
नामृतस्य हि पापीयान्भार्यामालभ्य जीवति ॥ ००९ ॥

तस्मिञ्जीवति पापिष्ठे सेनावाहे मम द्विषि ।
तत्कर्म कृतवत्यद्य कथं निद्रां निषेवसे ॥ ०१० ॥

स संप्रहाय शयनं राजपुत्र्या प्रबोधितः ।
उपातिष्ठत मेघाभः पर्यङ्के सोपसङ्ग्रहे ॥ ०११ ॥

अथाब्रवीद्राजपुत्रीं कौरव्यो महिषीं प्रियाम् ।
केनास्यर्थेन संप्राप्ता त्वरितेव ममान्तिकम्  ॥ ०१२  ॥

न ते प्रकृतिमान्वर्णः कृशा पाण्डुश्च लक्ष्यसे ।
आचक्ष्व परिशेषेण सर्वं विद्यामहं यथा  ॥ ०१३  ॥

सुखं वा यदि वा दुःखं द्वेष्यं वा यदि वा प्रियम् ।
यथावत्सर्वमाचक्ष्व श्रुत्वा ज्ञास्यामि यत्परम्  ॥ ०१४  ॥

अहमेव हि ते कृष्णे विश्वास्यः सर्वकर्मसु ।
अहमापत्सु चापि त्वां मोक्षयामि पुनः पुनः  ॥ ०१५  ॥

शीघ्रमुक्त्वा यथाकामं यत्ते कार्यं विवक्षितम् ।
गच्छ वै शयनायैव पुरा नान्योऽवबुध्यते  ॥ ०१६  ॥

---

# अध्याय ०१७

द्रौपद्युवाच  ॥

अशोच्यं नु कुतस्तस्या यस्या भर्ता युधिष्ठिरः ।
जानन्सर्वाणि दुःखानि किं मां त्वं परिपृच्छसि  ॥ ००१  ॥

यन्मां दासीप्रवादेन प्रातिकामी तदानयत् ।
सभायां पार्षदो मध्ये तन्मां दहति भारत  ॥ ००२  ॥

पार्थिवस्य सुता नाम का नु जीवेत मादृशी ।

अनुभूय भृशं दुःखमन्यत्र द्रौपदीं प्रभो ॥ ००३ ॥

वनवासगतायाश्च सैन्धवेन दुरात्मना ।
परामर्शं द्वितीयं च सोढुमुत्सहते नु का ॥ ००४ ॥

मत्स्यराज्ञः समक्षं च तस्य धूर्तस्य पश्यतः ।
कीचकेन पदा स्पृष्टा का नु जीवेत मादृशी ॥ ००५ ॥

एवं बहुविधैः क्लेशैः क्लिश्यमानां च भारत ।
न मां जानासि कौन्तेय किं फलं जीवितेन मे ॥ ००६ ॥

योऽयं राज्ञो विराटस्य कीचको नाम भारत ।
सेनानीः पुरुषव्याघ्र स्यालः परमदुर्मतिः ॥ ००७ ॥

स मां सैरन्ध्रिवेषेण वसन्तीं राजवेश्मनि ।
नित्यमेवाह दुष्टात्मा भार्या मम भवेति वै ॥ ००८ ॥

तेनोपमन्त्र्यमाणाया वधार्हेण सपत्नहन् ।
कालेनेव फलं पक्वं हृदयं मे विदीर्यते ॥ ००९ ॥

भ्रातरं च विगर्हस्व ज्येष्ठं दुर्द्यूतदेविनम् ।
यस्यास्मि कर्मणा प्राप्ता दुःखमेतदनन्तकम् ॥ ०१० ॥

को हि राज्यं परित्यज्य सर्वस्वं चात्मना सह ।
प्रव्रज्यायैव दीव्येत विना दुर्द्यूतदेविनम् ॥ ०११ ॥

यदि निष्कसहस्रेण यच्चान्यत्सारवद्धनम् ।
सायंप्रातरदेविष्यदपि संवत्सरान्बहून् ॥ ०१२ ॥

रुक्मं हिरण्यं वासांसि यानं युग्यमजाविकम् ।
अश्वाश्वतरसंघांश्च न जातु क्षयमावहेत् ॥ ०१३ ॥

सोऽयं द्यूतप्रवादेन श्रिया प्रत्यवरोपितः ।
तूष्णीमास्ते यथा मूढः स्वानि कर्माणि चिन्तयन्  ॥ ०१४  ॥

दश नागसहस्राणि पद्मिनां हेममालिनाम् ।
यं यान्तमनुयान्तीह सोऽयं द्यूतेन जीवति  ॥ ०१५  ॥

तथा शतसहस्राणि नृणाममिततेजसाम् ।
उपासते महाराजमिन्द्रप्रस्थे युधिष्ठिरम्  ॥ ०१६  ॥

शतं दासीसहस्राणि यस्य नित्यं महानसे ।
पात्रीहस्तं दिवारात्रमतिथीन्भोजयन्त्युत  ॥ ०१७  ॥

एष निष्कसहस्राणि प्रदाय ददतां वरः ।
द्यूतजेन ह्यनर्थेन महता समुपावृतः  ॥ ०१८  ॥

एनं हि स्वरसंपन्ना बहवः सूतमागधाः ।
सायंप्रातरुपातिष्ठन्सुमृष्टमणिकुण्डलाः  ॥ ०१९  ॥

सहस्रमृषयो यस्य नित्यमासन्सभासदः ।
तपःश्रुतोपसंपन्नाः सर्वकामैरुपस्थिताः  ॥ ०२०  ॥

अन्धान्वृद्धांस्तथानाथान्सर्वान्राष्ट्रेषु दुर्गतान् ।
बिभर्त्यविमना नित्यमानृशंस्याद्युधिष्ठिरः  ॥ ०२१  ॥

स एष निरयं प्राप्तो मत्स्यस्य परिचारकः ।
सभायां देविता राज्ञः कङ्को ब्रूते युधिष्ठिरः  ॥ ०२२  ॥

इन्द्रप्रस्थे निवसतः समये यस्य पार्थिवाः ।
आसन्बलिभृतः सर्वे सोऽद्यान्यैर्भृतिमिच्छति  ॥ ०२३  ॥

पार्थिवाः पृथिवीपाला यस्यासन्वशवर्तिनः ।
स वशे विवशो राजा परेषामद्य वर्तते ॥ ०२४ ॥

प्रताप्य पृथिवीं सर्वां रश्मिवानिव तेजसा ।
सोऽयं राज्ञो विराटस्य सभास्तारो युधिष्ठिरः ॥ ०२५ ॥

यमुपासन्त राजानः सभायामृषिभिः सह ।
तमुपासीनमद्यान्यं पश्य पाण्डव पाण्डवम् ॥ ०२६ ॥

अतदर्हं महाप्राज्ञं जीवितार्थेऽभिसंश्रितम् ।
दृष्ट्वा कस्य न दुःखं स्याद्धर्मात्मानं युधिष्ठिरम् ॥ ०२७ ॥

उपास्ते स्म सभायां यं कृत्स्ना वीर वसुंधरा ।
तमुपासीनमद्यान्यं पश्य भारत भारतम् ॥ ०२८ ॥

एवं बहुविधैर्दुःखैः पीड्यमानामनाथवत् ।
शोकसागरमध्यस्थां किं मां भीम न पश्यसि ॥ ०२९ ॥

---

# अध्याय ०१८

द्रौपद्युवाच ॥

इदं तु मे महद्दुःखं यत्प्रवक्ष्यामि भारत ।
न मेऽभ्यसूया कर्तव्या दुःखादेतद्ब्रवीम्यहम् ॥ ००१ ॥

शार्दूलैर्महिषैः सिंहैरागारे युध्यसे यदा ।
कैकेय्याः प्रेक्षमाणायास्तदा मे कश्मलो भवेत् ॥ ००२ ॥

प्रेक्षासमुत्थिता चापि कैकेयी ताः स्त्रियो वदेत् ।
प्रेक्ष्य मामनवद्याङ्गी कश्मलोपहतामिव ॥ ००३ ॥

स्नेहात्संवासजान्मन्ये सूदमेषा शुचिस्मिता ।
योध्यमानं महावीर्यैरिमं समनुशोचति ॥ ००४ ॥

कल्याणरूपा सैरन्ध्री बल्लवश्चातिसुन्दरः ।
स्त्रीणां च चित्तं दुर्ज्ञेयं युक्तरूपौ च मे मतौ ॥ ००५ ॥

सैरन्ध्री प्रियसंवासान्नित्यं करुणवेदिनी ।
अस्मिन्राजकुले चेमौ तुल्यकालनिवासिनौ ॥ ००६ ॥

इति ब्रुवाणा वाक्यानि सा मां नित्यमवेदयत् ।
क्रुध्यन्तीं मां च संप्रेक्ष्य समशङ्कत मां त्वयि ॥ ००७ ॥

तस्यां तथा ब्रुवत्यां तु दुःखं मां महदाविशत् ।
शोके यौधिष्ठिरे मग्ना नाहं जीवितुमुत्सहे ॥ ००८ ॥

यः सदेवान्मनुष्यांश्च सर्पांश्चैकरथोऽजयत् ।
सोऽयं राज्ञो विराटस्य कन्यानां नर्तको युवा ॥ ००९ ॥

योऽतर्पयदमेयात्मा खाण्डवे जातवेदसम् ।
सोऽन्तःपुरगतः पार्थः कूपेऽग्निरिव संवृतः ॥ ०१० ॥

यस्माद्भयममित्राणां सदैव पुरुषर्षभात् ।
स लोकपरिभूतेन वेषेणास्ते धनञ्जयः ॥ ०११ ॥

यस्य ज्यातलनिर्घोषात्समकम्पन्त शत्रवः ।
स्त्रियो गीतस्वनं तस्य मुदिताः पर्युपासते ॥ ०१२ ॥

किरीटं सूर्यसङ्काशं यस्य मूर्धनि शोभते ।
वेणीविकृतकेशान्तः सोऽयमद्य धनञ्जयः ॥ ०१३ ॥

यस्मिन्नस्त्राणि दिव्यानि समस्तानि महात्मनि ।
आधारः सर्वविद्यानां स धारयति कुण्डले ॥ ०१४ ॥

यं स्म राजसहस्राणि तेजसाप्रतिमानि वै ।
समरे नातिवर्तन्ते वेलामिव महार्णवः ॥ ०१५ ॥

सोऽयं राज्ञो विराटस्य कन्यानां नर्तको युवा ।
आस्ते वेषप्रतिच्छन्नः कन्यानां परिचारकः ॥ ०१६ ॥

यस्य स्म रथघोषेण समकम्पत मेदिनी ।
सपर्वतवना भीम सहस्थावरजङ्गमा ॥ ०१७ ॥

यस्मिञ्जाते महाभागे कुन्त्याः शोको व्यनश्यत ।
स शोचयति मामद्य भीमसेन तवानुजः ॥ ०१८ ॥

भूषितं तमलङ्कारैः कुण्डलैः परिहाटकैः ।
कम्बुपाणिनमायान्तं दृष्ट्वा सीदति मे मनः ॥ ०१९ ॥

तं वेणीकृतकेशान्तं भीमधन्वानमर्जुनम् ।
कन्यापरिवृतं दृष्ट्वा भीम सीदति मे मनः ॥ ०२० ॥

यदा ह्येनं परिवृतं कन्याभिर्देवरूपिणम् ।
प्रभिन्नमिव मातङ्गं परिकीर्णं करेणुभिः ॥ ०२१ ॥

मत्स्यमर्थपतिं पार्थं विराटं समुपस्थितम् ।
पश्यामि तूर्यमध्यस्थं दिशो नश्यन्ति मे तदा ॥ ०२२ ॥

नूनमार्या न जानाति कृच्छ्रं प्राप्तं धनञ्जयम् ।

अजातशत्रुं कौरव्यं मग्नं दुर्द्यूतदेविनम् ॥ ०२३ ॥

तथा दृष्ट्वा यवीयांसं सहदेवं युधां पतिम् ।
गोषु गोवेषमायान्तं पाण्डुभूतास्मि भारत ॥ ०२४ ॥

सहदेवस्य वृत्तानि चिन्तयन्ती पुनः पुनः ।
न विन्दामि महाबाहो सहदेवस्य दुष्कृतम् ॥ ०२५ ॥

यस्मिन्नेवंविधं दुःखं प्राप्नुयात्सत्यविक्रमः ॥ ०२५ ॥

दूयामि भरतश्रेष्ठ दृष्ट्वा ते भ्रातरं प्रियम् ।
गोषु गोवृषसङ्काशं मत्स्येनाभिनिवेशितम् ॥ ०२६ ॥

संरब्धं रक्तनेपथ्यं गोपालानां पुरोगमम् ।
विराटमभिनन्दन्तमथ मे भवति ज्वरः ॥ ०२७ ॥

सहदेवं हि मे वीरं नित्यमार्या प्रशंसति ।
महाभिजनसंपन्नो वृत्तवाञ्शीलवानिति ॥ ०२८ ॥

ह्रीनिषेधो मधुरवाग्धार्मिकश्च प्रियश्च मे ।
स तेऽरण्येषु बोद्धव्यो याज्ञसेनि क्षपास्वपि ॥ ०२९ ॥

तं दृष्ट्वा व्यापृतं गोषु वत्सचर्मक्षपाशयम् ।
सहदेवं युधां श्रेष्ठं किं नु जीवामि पाण्डव ॥ ०३० ॥

यस्त्रिभिर्नित्यसंपन्नो रूपेणास्त्रेण मेधया ।
सोऽश्वबन्धो विराटस्य पश्य कालस्य पर्ययम् ॥ ०३१ ॥

अभ्यकीर्यन्त वृन्दानि दामग्रन्थिमुदीक्षताम् ।
विनयन्तं जवेनाश्वान्महाराजस्य पश्यतः ॥ ०३२ ॥

अपश्यमेनं श्रीमन्तं मत्स्यं भ्राजिष्णुमुत्तमम् ।
विराटमुपतिष्ठन्तं दर्शयन्तं च वाजिनः ॥ ०३३ ॥

किं नु मां मन्यसे पार्थ सुखितेति परंतप ।
एवं दुःखशताविष्टा युधिष्ठिरनिमित्ततः ॥ ०३४ ॥

अतः प्रतिविशिष्टानि दुःखान्यन्यानि भारत ।
वर्तन्ते मयि कौन्तेय वक्ष्यामि शृणु तान्यपि ॥ ०३५ ॥

युष्मासु ध्रियमाणेषु दुःखानि विविधान्युत ।
शोषयन्ति शरीरं मे किं नु दुःखमतः परम् ॥ ०३६ ॥

---

# अध्याय ०१९

द्रौपद्युवाच ॥

अहं सैरन्ध्रिवेषेण चरन्ती राजवेश्मनि ।
शौचदास्मि सुदेष्णाया अक्षधूर्तस्य कारणात् ॥ ००१ ॥

विक्रियां पश्य मे तीव्रां राजपुत्र्याः परंतप ।
आसे कालमुपासीना सर्वं दुःखं किलार्तवत् ॥ ००२ ॥

अनित्या किल मर्त्यानामर्थसिद्धिर्जयाजयौ ।
इति कृत्वा प्रतीक्षामि भर्तॄणामुदयं पुनः ॥ ००३ ॥

य एव हेतुर्भवति पुरुषस्य जयावहः ।
पराजये च हेतुः स इति च प्रतिपालये ॥ ००४ ॥

दत्त्वा याचन्ति पुरुषा हत्वा वध्यन्ति चापरे ।
पातयित्वा च पात्यन्ते परैरिति च मे श्रुतम्  ॥ ००५  ॥

न दैवस्यातिभारोऽस्ति न दैवस्यातिवर्तनम् ।
इति चाप्यागमं भूयो दैवस्य प्रतिपालये  ॥ ००६  ॥

स्थितं पूर्वं जलं यत्र पुनस्तत्रैव तिष्ठति ।
इति पर्यायमिच्छन्ती प्रतीक्षाम्युदयं पुनः  ॥ ००७  ॥

दैवेन किल यस्यार्थः सुनीतोऽपि विपद्यते ।
दैवस्य चागमे यत्नस्तेन कार्यो विजानता  ॥ ००८  ॥

यत्तु मे वचनस्यास्य कथितस्य प्रयोजनम् ।
पृच्छ मां दुःखितां तत्त्वमपृष्टा वा ब्रवीमि ते  ॥ ००९  ॥

महिषी पाण्डुपुत्राणां दुहिता द्रुपदस्य च ।
इमामवस्थां संप्राप्ता का मदन्या जिजीविषेत्  ॥ ०१०  ॥

कुरून्परिभवन्सर्वान्पाञ्चालानपि भारत ।
पाण्डवेयांश्च संप्राप्तो मम क्लेशो ह्यरिंदम  ॥ ०११  ॥

भ्रातृभिः श्वशुरैः पुत्रैर्बहुभिः परवीरहन् ।
एवं समुदिता नारी का न्वन्या दुःखिता भवेत्  ॥ ०१२  ॥

नूनं हि बालया धातुर्मया वै विप्रियं कृतम् ।
यस्य प्रसादाद्दुर्नीतं प्राप्तास्मि भरतर्षभ  ॥ ०१३  ॥

वर्णावकाशमपि मे पश्य पाण्डव यादृशम् ।
यादृशो मे न तत्रासीद्दुःखे परमके तदा  ॥ ०१४  ॥

त्वमेव भीम जानीषे यन्मे पार्थ सुखं पुरा ।

साहं दासत्वमापन्ना न शान्तिमवशा लभे ॥ ०१५ ॥

नादैविकमिदं मन्ये यत्र पार्थो धनञ्जयः ।
भीमधन्वा महाबाहुरास्ते शान्त इवानलः ॥ ०१६ ॥

अशक्या वेदितुं पार्थ प्राणिनां वै गतिर्नरैः ।
विनिपातमिमं मन्ये युष्माकमविचिन्तितम् ॥ ०१७ ॥

यस्या मम मुखप्रेक्षा यूयमिन्द्रसमाः सदा ।
सा प्रेक्षे मुखमन्यासामवराणां वरा सती ॥ ०१८ ॥

पश्य पाण्डव मेऽवस्थां यथा नार्हामि वै तथा ।
युष्मासु ध्रियमाणेषु पश्य कालस्य पर्ययम् ॥ ०१९ ॥

यस्याः सागरपर्यन्ता पृथिवी वशवर्तिनी ।
आसीत्साद्य सुदेष्णाया भीताहं वशवर्तिनी ॥ ०२० ॥

यस्याः पुरःसरा आसन्पृष्ठतश्चानुगामिनः ।
साहमद्य सुदेष्णायाः पुरः पश्चाच्च गामिनी ॥ ०२१ ॥

इदं तु दुःखं कौन्तेय ममासह्यं निबोध तत् ॥ ०२१ ॥

या न जातु स्वयं पिंषे गात्रोद्वर्तनमात्मनः ।
अन्यत्र कुन्त्या भद्रं ते साद्य पिंषामि चन्दनम् ॥ ०२२ ॥

पश्य कौन्तेय पाणी मे नैवं यौ भवतः पुरा ॥ ०२२ ॥

वैशंपायन उवाच ॥

इत्यस्य दर्शयामास किणबद्धौ करावुभौ ।
द्रौपद्युवाच ॥

बिभेमि कुन्त्या या नाहं युष्माकं वा कदाचन ।
साद्याग्रतो विराटस्य भीता तिष्ठामि किङ्करी ॥ ०२४ ॥

किं नु वक्ष्यति सम्राण्मां वर्णकः सुकृतो न वा ।
नान्यपिष्टं हि मत्स्यस्य चन्दनं किल रोचते ॥ ०२५ ॥

वैशंपायन उवाच ॥

सा कीर्तयन्ती दुःखानि भीमसेनस्य भामिनी ।
रुरोद शनकैः कृष्णा भीमसेनमुदीक्षती ॥ ०२६ ॥

सा बाष्पकलया वाचा निःश्वसन्ती पुनः पुनः ।
हृदयं भीमसेनस्य घट्टयन्तीदमब्रवीत् ॥ ०२७ ॥

नाल्पं कृतं मया भीम देवानां किल्बिषं पुरा ।
अभाग्या यत्तु जीवामि मर्तव्ये सति पाण्डव ॥ ०२८ ॥

ततस्तस्याः करौ शूनौ किणबद्धौ वृकोदरः ।
मुखमानीय वेपन्त्या रुरोद परवीरहा ॥ ०२९ ॥

तौ गृहीत्वा च कौन्तेयो बाष्पमुत्सृज्य वीर्यवान् ।
ततः परमदुःखार्त इदं वचनमब्रवीत् ॥ ०३० ॥

---

# अध्याय ०२०

भीमसेन उवाच ॥

धिगस्तु मे बाहुबलं गाण्डीवं फल्गुनस्य च ।
यत्ते रक्तौ पुरा भूत्वा पाणी कृतकिणावुभौ ॥ ००१ ॥

सभायां स्म विराटस्य करोमि कदनं महत् ।
तत्र मां धर्मराजस्तु कटाक्षेण न्यवारयत् ॥ ००२ ॥

तदहं तस्य विज्ञाय स्थित एवास्मि भामिनि ॥ ००२ ॥

यच्च राष्ट्रात्प्रच्यवनं कुरूणामवधश्च यः ।
सुयोधनस्य कर्णस्य शकुनेः सौबलस्य च ॥ ००३ ॥

दुःशासनस्य पापस्य यन्मया न हृतं शिरः ।
तन्मे दहति कल्याणि हृदि शल्यमिवार्पितम् ॥ ००४ ॥

मा धर्मं जहि सुश्रोणि क्रोधं जहि महामते ॥ ००४ ॥

इमं च समुपालम्भं त्वत्तो राजा युधिष्ठिरः ।
शृणुयाद्यदि कल्याणि कृत्स्नं जह्यात्स जीवितम् ॥ ००५ ॥

धनञ्जयो वा सुश्रोणि यमौ वा तनुमध्यमे ।
लोकान्तरगतेष्वेषु नाहं शक्ष्यामि जीवितुम् ॥ ००६ ॥

सुकन्या नाम शार्याती भार्गवं च्यवनं वने ।
वल्मीकभूतं शाम्यन्तमन्वपद्यत भामिनी ॥ ००७ ॥

नाडायनी चेन्द्रसेना रूपेण यदि ते श्रुता ।
पतिमन्वचरद्वृद्धं पुरा वर्षसहस्रिणम् ॥ ००८ ॥

दुहिता जनकस्यापि वैदेही यदि ते श्रुता ।
पतिमन्वचरत्सीता महारण्यनिवासिनम् ॥ ००९ ॥

रक्षसा निग्रहं प्राप्य रामस्य महिषी प्रिया ।
क्लिश्यमानापि सुश्रोणी राममेवान्वपद्यत ॥ ०१० ॥

लोपामुद्रा तथा भीरु वयोरूपसमन्विता ।
अगस्त्यमन्वयाद्धित्वा कामान्सर्वानमानुषान् ॥ ०११ ॥

यथैताः कीर्तिता नार्यो रूपवत्यः पतिव्रताः ।
तथा त्वमपि कल्याणि सर्वैः समुदिता गुणैः ॥ ०१२ ॥

मादीर्घं क्षम कालं त्वं मासमध्यर्धसंमितम् ।
पूर्णे त्रयोदशे वर्षे राज्ञो राज्ञी भविष्यसि ॥ ०१३ ॥

द्रौपद्युवाच ॥

आर्तयैतन्मया भीम कृतं बाष्पविमोक्षणम् ।
अपारयन्त्या दुःखानि न राजानमुपालभे ॥ ०१४ ॥

विमुक्तेन व्यतीतेन भीमसेन महाबल ।
प्रत्युपस्थितकालस्य कार्यस्यानन्तरो भव ॥ ०१५ ॥

ममेह भीम कैकेयी रूपाभिभवशङ्कया ।
नित्यमुद्विजते राजा कथं नेयादिमामिति ॥ ०१६ ॥

तस्या विदित्वा तं भावं स्वयं चानृतदर्शनः ।
कीचकोऽयं सुदुष्टात्मा सदा प्रार्थयते हि माम् ॥ ०१७ ॥

तमहं कुपिता भीम पुनः कोपं नियम्य च ।
अब्रुवं कामसंमूढमात्मानं रक्ष कीचक ॥ ०१८ ॥

गन्धर्वाणामहं भार्या पञ्चानां महिषी प्रिया ।
ते त्वां निहन्युर्दुर्धर्षाः शूराः साहसकारिणः ॥ ०१९ ॥

एवमुक्तः स दुष्टात्मा कीचकः प्रत्युवाच ह ।
नाहं बिभेमि सैरन्ध्रि गन्धर्वाणां शुचिस्मिते ॥ ०२० ॥

शतं सहस्रमपि वा गन्धर्वाणामहं रणे ।
समागतं हनिष्यामि त्वं भीरु कुरु मे क्षणम् ॥ ०२१ ॥

इत्युक्ते चाब्रुवं सूतं कामातुरमहं पुनः ।
न त्वं प्रतिबलस्तेषां गन्धर्वाणां यशस्विनाम् ॥ ०२२ ॥

धर्मे स्थितास्मि सततं कुलशीलसमन्विता ।
नेच्छामि कञ्चिद्वध्यन्तं तेन जीवसि कीचक ॥ ०२३ ॥

एवमुक्तः स दुष्टात्मा प्रहस्य स्वनवत्तदा ।
न तिष्ठति स्म सन्मार्गे न च धर्मं बुभूषति ॥ ०२४ ॥

पापात्मा पापभावश्च कामरागवशानुगः ।
अविनीतश्च दुष्टात्मा प्रत्याख्यातः पुनः पुनः ॥ ०२५ ॥

दर्शने दर्शने हन्यात्तथा जह्यां च जीवितम् ॥ ०२५ ॥

तद्धर्मे यतमानानां महान्धर्मो नशिष्यति ।
समयं रक्षमाणानां भार्या वो न भविष्यति ॥ ०२६ ॥

भार्यायां रक्ष्यमाणायां प्रजा भवति रक्षिता ।
प्रजायां रक्ष्यमाणायामात्मा भवति रक्षितः ॥ ०२७ ॥

वदतां वर्णधर्मांश्च ब्राह्मणानां हि मे श्रुतम् ।
क्षत्रियस्य सदा धर्मो नान्यः शत्रुनिबर्हणात् ॥ ०२८ ॥

पश्यतो धर्मराजस्य कीचको मां पदावधीत् ।

तव चैव समक्षं वै भीमसेन महाबल ॥ ०२९ ॥

त्वया ह्यहं परित्राता तस्माद्घोराज्जटासुरात् ।
जयद्रथं तथैव त्वमजैषीर्भ्रातृभिः सह ॥ ०३० ॥

जहीममपि पापं त्वं योऽयं मामवमन्यते ।
कीचको राजवाल्लभ्याच्छोककृन्मम भारत ॥ ०३१ ॥

तमेवं कामसंमत्तं भिन्धि कुम्भमिवाश्मनि ।
यो निमित्तमनर्थानां बहूनां मम भारत ॥ ०३२ ॥

तं चेज्जीवन्तमादित्यः प्रातरभ्युदयिष्यति ।
विषमालोड्य पास्यामि मा कीचकवशं गमम् ॥ ०३३ ॥

श्रेयो हि मरणं मह्यं भीमसेन तवाग्रतः ॥ ०३३ ॥

वैशंपायन उवाच ॥

इत्युक्त्वा प्रारुदत्कृष्णा भीमस्योरः समाश्रिता ।
भीमश्च तां परिष्वज्य महत्सान्त्वं प्रयुज्य च ॥ ०३४ ॥

कीचकं मनसागच्छत्सृक्किणी परिसंलिहन् ॥ ०३४ ॥

---

# अध्याय ०२१

भीमसेन उवाच ॥

तथा भद्रे करिष्यामि यथा त्वं भीरु भाषसे ।

अद्य तं सूदयिष्यामि कीचकं सहबान्धवम्  ॥ ००१  ॥

अस्याः प्रदोषे शर्वर्याः कुरुष्वानेन सङ्गमम् ।
दुःखं शोकं च निर्धूय याज्ञसेनि शुचिस्मिते  ॥ ००२  ॥

यैषा नर्तनशाला वै मत्स्यराजेन कारिता ।
दिवात्र कन्या नृत्यन्ति रात्रौ यान्ति यथागृहम्  ॥ ००३  ॥

तत्रास्ति शयनं भीरु दृढाङ्गं सुप्रतिष्ठितम् ।
तत्रास्य दर्शयिष्यामि पूर्वप्रेतान्पितामहान्  ॥ ००४  ॥

यथा च त्वां न पश्येयुः कुर्वाणां तेन संविदम् ।
कुर्यास्तथा त्वं कल्याणि यथा संनिहितो भवेत्  ॥ ००५  ॥

वैशंपायन उवाच  ॥

तथा तौ कथयित्वा तु बाष्पमुत्सृज्य दुःखितौ ।
रात्रिशेषं तदत्युग्रं धारयामासतुर्हृदा  ॥ ००६  ॥

तस्यां रात्र्यां व्यतीतायां प्रातरुत्थाय कीचकः ।
गत्वा राजकुलायैव द्रौपदीमिदमब्रवीत्  ॥ ००७  ॥

सभायां पश्यतो राज्ञः पातयित्वा पदाहनम् ।
न चैवालभथास्त्राणमभिपन्ना बलीयसा  ॥ ००८  ॥

प्रवादेन हि मत्स्यानां राजा नाम्नायमुच्यते ।
अहमेव हि मत्स्यानां राजा वै वाहिनीपतिः  ॥ ००९  ॥

सा सुखं प्रतिपद्यस्व दासो भीरु भवामि ते ।
अह्नाय तव सुश्रोणि शतं निष्कान्ददाम्यहम्  ॥ ०१०  ॥

दासीशतं च ते दद्यां दासानामपि चापरम् ।
रथं चाश्वतरीयुक्तमस्तु नौ भीरु सङ्गमः ॥ ०११ ॥

द्रौपद्युवाच ॥

एकं मे समयं त्वद्य प्रतिपद्यस्व कीचक ।
न त्वां सखा वा भ्राता वा जानीयात्सङ्गतं मया ॥ ०१२ ॥

अवबोधाद्धि भीतास्मि गन्धर्वाणां यशस्विनाम् ।
एवं मे प्रतिजानीहि ततोऽहं वशगा तव ॥ ०१३ ॥

कीचक उवाच ॥

एवमेतत्करिष्यामि यथा सुश्रोणि भाषसे ।
एको भद्रे गमिष्यामि शून्यमावसथं तव ॥ ०१४ ॥

समागमार्थं रम्भोरु त्वया मदनमोहितः ।
यथा त्वां नावभोत्स्यन्ति गन्धर्वाः सूर्यवर्चसः ॥ ०१५ ॥

द्रौपद्युवाच ॥

यदिदं नर्तनागारं मत्स्यराजेन कारितम् ।
दिवात्र कन्या नृत्यन्ति रात्रौ यान्ति यथागृहम् ॥ ०१६ ॥

तमिस्रे तत्र गच्छेथा गन्धर्वास्तन्न जानते ।
तत्र दोषः परिहृतो भविष्यति न संशयः ॥ ०१७ ॥

वैशंपायन उवाच ॥

तमर्थं प्रतिजल्पन्त्याः कृष्णायाः कीचकेन ह ।
दिवसार्धं समभवन्मासेनैव समं नृप ॥ ०१८ ॥

कीचकोऽथ गृहं गत्वा भृशं हर्षपरिप्लुतः ।
सैरन्ध्रीरूपिणं मूढो मृत्युं तं नावबुद्धवान्  ॥ ०१९  ॥

गन्धाभरणमाल्येषु व्यासक्तः स विशेषतः ।
अलञ्चकार सोऽऽत्मानं सत्वरः काममोहितः  ॥ ०२०  ॥

तस्य तत्कुर्वतः कर्म कालो दीर्घ इवाभवत् ।
अनुचिन्तयतश्चापि तामेवायतलोचनाम्  ॥ ०२१  ॥

आसीदभ्यधिका चास्य श्रीः श्रियं प्रमुमुक्षतः ।
निर्वाणकाले दीपस्य वर्तीमिव दिधक्षतः  ॥ ०२२  ॥

कृतसंप्रत्ययस्तत्र कीचकः काममोहितः ।
नाजानाद्दिवसं यान्तं चिन्तयानः समागमम्  ॥ ०२३  ॥

ततस्तु द्रौपदी गत्वा तदा भीमं महानसे ।
उपातिष्ठत कल्याणी कौरव्यं पतिमन्तिकात्  ॥ ०२४  ॥

तमुवाच सुकेशान्ता कीचकस्य मया कृतः ।
सङ्गमो नर्तनागारे यथावोचः परंतप  ॥ ०२५  ॥

शून्यं स नर्तनागारमागमिष्यति कीचकः ।
एको निशि महाबाहो कीचकं तं निषूदय  ॥ ०२६  ॥

तं सूतपुत्रं कौन्तेय कीचकं मददर्पितम् ।
गत्वा त्वं नर्तनागारं निर्जीवं कुरु पाण्डव  ॥ ०२७  ॥

दर्पाच्च सूतपुत्रोऽसौ गन्धर्वानवमन्यते ।
तं त्वं प्रहरतां श्रेष्ठ नडं नाग इवोद्धर  ॥ ०२८  ॥

अश्रु दुःखाभिभूताया मम मार्जस्व भारत ।
आत्मनश्चैव भद्रं ते कुरु मानं कुलस्य च ॥ ०२९ ॥

भीमसेन उवाच ॥

स्वागतं ते वरारोहे यन्मा वेदयसे प्रियम् ।
न ह्यस्य कञ्चिदिच्छामि सहायं वरवर्णिनि ॥ ०३० ॥

या मे प्रीतिस्त्वयाख्याता कीचकस्य समागमे ।
हत्वा हिडिम्बं सा प्रीतिर्ममासीद्वरवर्णिनि ॥ ०३१ ॥

सत्यं भ्रातॄंश्च धर्मं च पुरस्कृत्य ब्रवीमि ते ।
कीचकं निहनिष्यामि वृत्रं देवपतिर्यथा ॥ ०३२ ॥

तं गह्वरे प्रकाशे वा पोथयिष्यामि कीचकम् ।
अथ चेदवभोत्स्यन्ति हंस्ये मत्स्यानपि ध्रुवम् ॥ ०३३ ॥

ततो दुर्योधनं हत्वा प्रतिपत्स्ये वसुंधराम् ।
कामं मत्स्यमुपास्तां हि कुन्तीपुत्रो युधिष्ठिरः ॥ ०३४ ॥

द्रौपद्युवाच ॥

यथा न संत्यजेथास्त्वं सत्यं वै मत्कृते विभो ।
निगूढस्त्वं तथा वीर कीचकं विनिपातय ॥ ०३५ ॥

भीमसेन उवाच ॥

एवमेतत्करिष्यामि यथा त्वं भीरु भाषसे ।
अदृश्यमानस्तस्याद्य तमस्विन्यामनिन्दिते ॥ ०३६ ॥

नागो बिल्वमिवाक्रम्य पोथयिष्याम्यहं शिरः ।

अलभ्यामिच्छतस्तस्य कीचकस्य दुरात्मनः ॥ ०३७ ॥

वैशंपायन उवाच ॥

भीमोऽथ प्रथमं गत्वा रात्रौ छन्न उपाविशत् ।
मृगं हरिरिवादृश्यः प्रत्याकाङ्क्षत्स कीचकम् ॥ ०३८ ॥

कीचकश्चाप्यलङ्कृत्य यथाकाममुपाव्रजत् ।
तां वेलां नर्तनागारे पाञ्चालीसङ्गमाशया ॥ ०३९ ॥

मन्यमानः स सङ्केतमागारं प्राविशच्च तम् ।
प्रविश्य च स तद्वेश्म तमसा संवृतं महत् ॥ ०४० ॥

पूर्वागतं ततस्तत्र भीममप्रतिमौजसम् ।
एकान्तमास्थितं चैनमाससाद सुदुर्मतिः ॥ ०४१ ॥

शयानं शयने तत्र मृत्युं सूतः परामृशत् ।
जाज्वल्यमानं कोपेन कृष्णाधर्षणजेन ह ॥ ०४२ ॥

उपसङ्गम्य चैवैनं कीचकः काममोहितः ।
हर्षोन्मथितचित्तात्मा स्मयमानोऽभ्यभाषत ॥ ०४३ ॥

प्रापितं ते मया वित्तं बहुरूपमनन्तकम् ।
तत्सर्वं त्वां समुद्दिश्य सहसा समुपागतः ॥ ०४४ ॥

नाकस्मान्मां प्रशंसन्ति सदा गृहगताः स्त्रियः ।
सुवासा दर्शनीयश्च नान्योऽस्ति त्वादृशः पुमान् ॥ ०४५ ॥

भीमसेन उवाच ॥

दिष्ट्या त्वं दर्शनीयोऽसि दिष्ट्यात्मानं प्रशंससि ।

ईदृशस्तु त्वया स्पर्शः स्पृष्टपूर्वो न कर्हिचित्  ॥ ०४६  ॥

वैशंपायन उवाच  ॥

इत्युक्त्वा तं महाबाहुर्भीमो भीमपराक्रमः ।
समुत्पत्य च कौन्तेयः प्रहस्य च नराधमम्  ॥ ०४७  ॥

भीमो जग्राह केशेषु माल्यवत्सु सुगन्धिषु  ॥ ०४७  ॥

स केशेषु परामृष्टो बलेन बलिनां वरः ।
आक्षिप्य केशान्वेगेन बाह्वोर्जग्राह पाण्डवम्  ॥ ०४८  ॥

बाहुयुद्धं तयोरासीत्क्रुद्धयोर्नरसिंहयोः ।
वसन्ते वाशिताहेतोर्बलवद्गजयोरिव  ॥ ०४९  ॥

ईषदागलितं चापि क्रोधाच्चलपदं स्थितम् ।
कीचको बलवान्भीमं जानुभ्यामाक्षिपद्भुवि  ॥ ०५०  ॥

पातितो भुवि भीमस्तु कीचकेन बलीयसा ।
उत्पपाताथ वेगेन दण्डाहत इवोरगः  ॥ ०५१  ॥

स्पर्धया च बलोन्मत्तौ तावुभौ सूतपाण्डवौ ।
निशीथे पर्यकर्षेतां बलिनौ निशि निर्जने  ॥ ०५२  ॥

ततस्तद्भवनश्रेष्ठं प्राकम्पत मुहुर्मुहुः ।
बलवच्चापि सङ्क्रुद्धावन्योन्यं तावगर्जताम्  ॥ ०५३  ॥

तलाभ्यां तु स भीमेन वक्षस्यभिहतो बली ।
कीचको रोषसंतप्तः पदान्न चलितः पदम्  ॥ ०५४  ॥

मुहूर्तं तु स तं वेगं सहित्वा भुवि दुःसहम् ।

बलादहीयत तदा सूतो भीमबलार्दितः ॥ ०५५ ॥

तं हीयमानं विज्ञाय भीमसेनो महाबलः ।
वक्षस्यानीय वेगेन ममन्थैनं विचेतसम् ॥ ०५६ ॥

क्रोधाविष्टो विनिःश्वस्य पुनश्चैनं वृकोदरः ।
जग्राह जयतां श्रेष्ठः केशेष्वेव तदा भृशम् ॥ ०५७ ॥

गृहीत्वा कीचकं भीमो विरुराव महाबलः ।
शार्दूलः पिशिताकाङ्क्षी गृहीत्वेव महामृगम् ॥ ०५८ ॥

तस्य पादौ च पाणी च शिरो ग्रीवां च सर्वशः ।
काये प्रवेशयामास पशोरिव पिनाकधृक् ॥ ०५९ ॥

तं संमथितसर्वाङ्गं मांसपिण्डोपमं कृतम् ।
कृष्णायै दर्शयामास भीमसेनो महाबलः ॥ ०६० ॥

उवाच च महातेजा द्रौपदीं पाण्डुनन्दनः ।
पश्यैनमेहि पाञ्चालि कामुकोऽयं यथा कृतः ॥ ०६१ ॥

तथा स कीचकं हत्वा गत्वा रोषस्य वै शमम् ।
आमन्त्र्य द्रौपदीं कृष्णां क्षिप्रमायान्महानसम् ॥ ०६२ ॥

कीचकं घातयित्वा तु द्रौपदी योषितां वरा ।
प्रहृष्टा गतसंतापा सभापालानुवाच ह ॥ ०६३ ॥

कीचकोऽयं हतः शेते गन्धर्वैः पतिभिर्मम ।
परस्त्रीकामसंमत्तः समागच्छत पश्यत ॥ ०६४ ॥

तच्छ्रुत्वा भाषितं तस्या नर्तनागाररक्षिणः ।
सहसैव समाजग्मुरादायोल्काः सहस्रशः ॥ ०६५ ॥

ततो गत्वाथ तद्वेश्म कीचकं विनिपातितम् ।
गतासुं ददृशुर्भूमौ रुधिरेण समुक्षितम्  ॥ ०६६  ॥

क्वास्य ग्रीवा क्व चरणौ क्व पाणी क्व शिरस्तथा ।
इति स्म तं परीक्षन्ते गन्धर्वेण हतं तदा  ॥ ०६७  ॥

---

# अध्याय ०२२

वैशंपायन उवाच  ॥

तस्मिन्काले समागम्य सर्वे तत्रास्य बान्धवाः ।
रुरुदुः कीचकं दृष्ट्वा परिवार्य समन्ततः  ॥ ००१  ॥

सर्वे संहृष्टरोमाणः संत्रस्ताः प्रेक्ष्य कीचकम् ।
तथा सर्वाङ्गसंभुग्नं कूर्मं स्थल इवोद्धृतम्  ॥ ००२  ॥

पोथितं भीमसेनेन तमिन्द्रेणेव दानवम् ।
संस्कारयितुमिच्छन्तो बहिर्नेतुं प्रचक्रमुः  ॥ ००३  ॥

ददृशुस्ते ततः कृष्णां सूतपुत्राः समागताः ।
अदूरादनवद्याङ्गीं स्तम्भमालिङ्ग्य तिष्ठतीम्  ॥ ००४  ॥

समवेतेषु सूतेषु तानुवाचोपकीचकः ।
हन्यतां शीघ्रमसती यत्कृते कीचको हतः  ॥ ००५  ॥

अथ वा नेह हन्तव्या दह्यतां कामिना सह ।
मृतस्यापि प्रियं कार्यं सूतपुत्रस्य सर्वथा  ॥ ००६  ॥

ततो विराटमूचुस्ते कीचकोऽस्याः कृते हतः ।
सहाद्यानेन दह्येत तदनुज्ञातुमर्हसि ॥ ००७ ॥

पराक्रमं तु सूतानां मत्वा राजान्वमोदत ।
सैरन्ध्र्याः सूतपुत्रेण सह दाहं विशां पते ॥ ००८ ॥

तां समासाद्य वित्रस्तां कृष्णां कमललोचनाम् ।
मोमुह्यमानां ते तत्र जगृहुः कीचका भृशम् ॥ ००९ ॥

ततस्तु तां समारोप्य निबध्य च सुमध्यमाम् ।
जग्मुरुद्यम्य ते सर्वे श्मशानमभितस्तदा ॥ ०१० ॥

ह्रियमाणा तु सा राजन्सूतपुत्रैरनिन्दिता ।
प्राक्रोशन्नाथमिच्छन्ती कृष्णा नाथवती सती ॥ ०११ ॥

द्रौपद्युवाच ॥

जयो जयन्तो विजयो जयत्सेनो जयद्बलः ।
ते मे वाचं विजानन्तु सूतपुत्रा नयन्ति माम् ॥ ०१२ ॥

येषां ज्यातलनिर्घोषो विस्फूर्जितमिवाशनेः ।
व्यश्रूयत महायुद्धे भीमघोषस्तरस्विनाम् ॥ ०१३ ॥

रथघोषश्च बलवान्गन्धर्वाणां यशस्विनाम् ।
ते मे वाचं विजानन्तु सूतपुत्रा नयन्ति माम् ॥ ०१४ ॥

वैशंपायन उवाच ॥

तस्यास्ताः कृपणा वाचः कृष्णायाः परिदेविताः ।
श्रुत्वैवाभ्यपतद्भीमः शयनादविचारयन् ॥ ०१५ ॥

भीमसेन उवाच ॥

अहं शृणोमि ते वाचं त्वया सैरन्ध्रि भाषिताम् ।
तस्मात्ते सूतपुत्रेभ्यो न भयं भीरु विद्यते ॥ ०१६ ॥

वैशंपायन उवाच ॥

इत्युक्त्वा स महाबाहुर्विजजृम्भे जिघांसया ।
ततः स व्यायतं कृत्वा वेषं विपरिवर्त्य च ॥ ०१७ ॥

अद्वारेणाभ्यवस्कन्द्य निर्जगाम बहिस्तदा ॥ ०१७ ॥

स भीमसेनः प्राकारादारुज्य तरसा द्रुमम् ।
श्मशानाभिमुखः प्रायाद्यत्र ते कीचका गताः ॥ ०१८ ॥

स तं वृक्षं दशव्यामं सस्कन्धविटपं बली ।
प्रगृह्याभ्यद्रवत्सूतान्दण्डपाणिरिवान्तकः ॥ ०१९ ॥

ऊरुवेगेन तस्याथ न्यग्रोधाश्वत्थकिंशुकाः ।
भूमौ निपतिता वृक्षाः संघशस्तत्र शेरते ॥ ०२० ॥

तं सिंहमिव सङ्क्रुद्धं दृष्ट्वा गन्धर्वमागतम् ।
वित्रेसुः सर्वतः सूता विषादभयकम्पिताः ॥ ०२१ ॥

तमन्तकमिवायान्तं गन्धर्वं प्रेक्ष्य ते तदा ।
दिधक्षन्तस्तदा ज्येष्ठं भ्रातरं ह्युपकीचकाः ॥ ०२२ ॥

परस्परमथोचुस्ते विषादभयकम्पिताः ॥ ०२२ ॥

गन्धर्वो बलवानेति क्रुद्ध उद्यम्य पादपम् ।

सैरन्ध्री मुच्यतां शीघ्रं महन्नो भयमागतम् ॥ ०२३ ॥

ते तु दृष्ट्वा तमाविद्धं भीमसेनेन पादपम् ।
विमुच्य द्रौपदीं तत्र प्राद्रवन्नगरं प्रति ॥ ०२४ ॥

द्रवतस्तांस्तु संप्रेक्ष्य स वज्री दानवानिव ।
शतं पञ्चाधिकं भीमः प्राहिणोद्यमसादनम् ॥ ०२५ ॥

तत आश्वासयत्कृष्णां प्रविमुच्य विशां पते ।
उवाच च महाबाहुः पाञ्चालीं तत्र द्रौपदीम् ॥ ०२६ ॥

अश्रुपूर्णमुखीं दीनां दुर्धर्षः स वृकोदरः ॥ ०२६ ॥

एवं ते भीरु वध्यन्ते ये त्वां क्लिश्यन्त्यनागसम् ।
प्रैहि त्वं नगरं कृष्णे न भयं विद्यते तव ॥ ०२७ ॥

अन्येनाहं गमिष्यामि विराटस्य महानसम् ॥ ०२७ ॥

पञ्चाधिकं शतं तच्च निहतं तत्र भारत ।
महावनमिव छिन्नं शिश्ये विगलितद्रुमम् ॥ ०२८ ॥

एवं ते निहता राजञ्शतं पञ्च च कीचकाः ।
स च सेनापतिः पूर्वमित्येतत्सूतषड्शतम् ॥ ०२९ ॥

तद्दृष्ट्वा महदाश्चर्यं नरा नार्यश्च सङ्गताः ।
विस्मयं परमं गत्वा नोचुः किञ्चन भारत ॥ ०३० ॥

# अध्याय ०२३

वैशंपायन उवाच ॥

ते दृष्ट्वा निहतान्सूतान्राज्ञे गत्वा न्यवेदयन् ।
गन्धर्वैर्निहता राजन्सूतपुत्राः परःशताः ॥ ००१ ॥

यथा वज्रेण वै दीर्णं पर्वतस्य महच्छिरः ।
विनिकीर्णं प्रदृश्येत तथा सूता महीतले ॥ ००२ ॥

सैरन्ध्री च विमुक्तासौ पुनरायाति ते गृहम् ।
सर्वं संशयितं राजन्नगरं ते भविष्यति ॥ ००३ ॥

तथारूपा हि सैरन्ध्री गन्धर्वाश्च महाबलाः ।
पुंसामिष्टश्च विषयो मैथुनाय न संशयः ॥ ००४ ॥

यथा सैरन्ध्रिवेषेण न ते राजन्निदं पुरम् ।
विनाशमेति वै क्षिप्रं तथा नीतिर्विधीयताम् ॥ ००५ ॥

तेषां तद्वचनं श्रुत्वा विराटो वाहिनीपतिः ।
अब्रवीत्क्रियतामेषां सूतानां परमक्रिया ॥ ००६ ॥

एकस्मिन्नेव ते सर्वे सुसमिद्धे हुताशने ।
दह्यन्तां कीचकाः शीघ्रं रत्नैर्गन्धैश्च सर्वशः ॥ ००७ ॥

सुदेष्णां चाब्रवीद्राजा महिषीं जातसाध्वसः ।
सैरन्ध्रीमागतां ब्रूया ममैव वचनादिदम् ॥ ००८ ॥

गच्छ सैरन्ध्रि भद्रं ते यथाकामं चराबले ।
बिभेति राजा सुश्रोणि गन्धर्वेभ्यः पराभवात् ॥ ००९ ॥

न हि तामुत्सहे वक्तुं स्वयं गन्धर्वरक्षिताम् ।
स्त्रियस्त्वदोषास्तां वक्तुमतस्त्वां प्रब्रवीम्यहम् ॥ ०१० ॥

अथ मुक्ता भयात्कृष्णा सूतपुत्रान्निरस्य च ।
मोक्षिता भीमसेनेन जगाम नगरं प्रति ॥ ०११ ॥

त्रासितेव मृगी बाला शार्दूलेन मनस्विनी ।
गात्राणि वाससी चैव प्रक्षाल्य सलिलेन सा ॥ ०१२ ॥

तां दृष्ट्वा पुरुषा राजन्प्राद्रवन्त दिशो दश ।
गन्धर्वाणां भयत्रस्ताः केचिद्दृष्टीर्न्यमीलयन् ॥ ०१३ ॥

ततो महानसद्वारि भीमसेनमवस्थितम् ।
ददर्श राजन्पाञ्चाली यथा मत्तं महाद्विपम् ॥ ०१४ ॥

तं विस्मयन्ती शनकैः सञ्ज्ञाभिरिदमब्रवीत् ।
गन्धर्वराजाय नमो येनास्मि परिमोचिता ॥ ०१५ ॥

भीमसेन उवाच ॥

ये यस्या विचरन्तीह पुरुषा वशवर्तिनः ।
तस्यास्ते वचनं श्रुत्वा अनृणा विचरन्त्युत ॥ ०१६ ॥

वैशंपायन उवाच ॥

ततः सा नर्तनागारे धनञ्जयमपश्यत ।
राज्ञः कन्या विराटस्य नर्तयानं महाभुजम् ॥ ०१७ ॥

ततस्ता नर्तनागाराद्विनिष्क्रम्य सहार्जुनाः ।
कन्या ददृशुरायान्तीं कृष्णां क्लिष्टामनागसम् ॥ ०१८ ॥

कन्या ऊचुः ॥

दिष्ट्या सैरन्ध्रि मुक्तासि दिष्ट्यासि पुनरागता ।
दिष्ट्या विनिहताः सूता ये त्वां क्लिश्यन्त्यनागसम् ॥ ०१९ ॥

बृहन्नडोवाच ॥

कथं सैरन्ध्रि मुक्तासि कथं पापाश्च ते हताः ।
इच्छामि वै तव श्रोतुं सर्वमेव यथातथम् ॥ ०२० ॥

सैरन्ध्र्युवाच ॥

बृहन्नडे किं नु तव सैरन्ध्र्या कार्यमद्य वै ।
या त्वं वससि कल्याणि सदा कन्यापुरे सुखम् ॥ ०२१ ॥

न हि दुःखं समाप्नोषि सैरन्ध्री यदुपाश्नुते ।
तेन मां दुःखितामेवं पृच्छसे प्रहसन्निव ॥ ०२२ ॥

बृहन्नडोवाच ॥

बृहन्नडापि कल्याणि दुःखमाप्नोत्यनुत्तमम् ।
तिर्यग्योनिगता बाले न चैनामवबुध्यसे ॥ ०२३ ॥

वैशंपायन उवाच ॥

ततः सहैव कन्याभिर्द्रौपदी राजवेश्म तत् ।
प्रविवेश सुदेष्णायाः समीपमपलायिनी ॥ ०२४ ॥

तामब्रवीद्राजपुत्री विराटवचनादिदम् ।
सैरन्ध्रि गम्यतां शीघ्रं यत्र कामयसे गतिम् ॥ ०२५ ॥

राजा बिभेति भद्रं ते गन्धर्वेभ्यः पराभवात् ।
त्वं चापि तरुणी सुभ्रु रूपेणाप्रतिमा भुवि ॥ ०२६ ॥

सैरन्ध्र्युवाच ॥

त्रयोदशाहमात्रं मे राजा क्षमतु भामिनि ।
कृतकृत्या भविष्यन्ति गन्धर्वास्ते न संशयः ॥ ०२७ ॥

ततो मां तेऽपनेष्यन्ति करिष्यन्ति च ते प्रियम् ।
ध्रुवं च श्रेयसा राजा योक्ष्यते सह बान्धवैः ॥ ०२८ ॥

---

# गोग्रहणपर्व

## अध्याय ०२४

वैशंपायन उवाच ॥

कीचकस्य तु घातेन सानुजस्य विशां पते ।
अत्याहितं चिन्तयित्वा व्यस्मयन्त पृथग्जनाः ॥ ००१ ॥

तस्मिन्पुरे जनपदे सञ्जल्पोऽभूच्च सर्वशः ।
शौर्याद्धि वल्लभो राज्ञो महासत्त्वश्च कीचकः ॥ ००२ ॥

आसीत्प्रहर्ता च नृणां दारामर्शी च दुर्मतिः ।
स हतः खलु पापात्मा गन्धर्वैर्दुष्टपूरुषः ॥ ००३ ॥

इत्यजल्पन्महाराज परानीकविशातनम् ।

देशे देशे मनुष्याश्च कीचकं दुष्प्रधर्षणम्  ॥ ००४  ॥

अथ वै धार्तराष्ट्रेण प्रयुक्ता ये बहिश्चराः ।
मृगयित्वा बहून्ग्रामान्राष्ट्राणि नगराणि च  ॥ ००५  ॥

संविधाय यथादिष्टं यथादेशप्रदर्शनम् ।
कृतचिन्ता न्यवर्तन्त ते च नागपुरं प्रति  ॥ ००६  ॥

तत्र दृष्ट्वा तु राजानं कौरव्यं धृतराष्ट्रजम् ।
द्रोणकर्णकृपैः सार्धं भीष्मेण च महात्मना  ॥ ००७  ॥

सङ्गतं भ्रातृभिश्चापि त्रिगर्तैश्च महारथैः ।
दुर्योधनं सभामध्ये आसीनमिदमब्रुवन्  ॥ ००८  ॥

कृतोऽस्माभिः परो यत्नस्तेषामन्वेषणे सदा ।
पाण्डवानां मनुष्येन्द्र तस्मिन्महति कानने  ॥ ००९  ॥

निर्जने मृगसङ्कीर्णे नानाद्रुमलतावृते ।
लताप्रतानबहुले नानागुल्मसमावृते  ॥ ०१०  ॥

न च विद्मो गता येन पार्थाः स्युर्दृढविक्रमाः ।
मार्गमाणाः पदन्यासं तेषु तेषु तथा तथा  ॥ ०११  ॥

गिरिकूटेषु तुङ्गेषु नानाजनपदेषु च ।
जनाकीर्णेषु देशेषु खर्वटेषु पुरेषु च  ॥ ०१२  ॥

नरेन्द्र बहुशोऽन्विष्टा नैव विद्मश्च पाण्डवान् ।
अत्यन्तभावं नष्टास्ते भद्रं तुभ्यं नरर्षभ  ॥ ०१३  ॥

वर्त्मान्यन्विष्यमाणास्तु रथानां रथसत्तम ।
कञ्चित्कालं मनुष्येन्द्र सूतानामनुगा वयम्  ॥ ०१४  ॥

मृगयित्वा यथान्यायं विदितार्थाः स्म तत्त्वतः ।
प्राप्ता द्वारवतीं सूता ऋते पार्थैः परंतप ॥ ०१५ ॥

न तत्र पाण्डवा राजन्नापि कृष्णा पतिव्रता ।
सर्वथा विप्रनष्टास्ते नमस्ते भरतर्षभ ॥ ०१६ ॥

न हि विद्मो गतिं तेषां वासं वापि महात्मनाम् ।
पाण्डवानां प्रवृत्तिं वा विद्मः कर्मापि वा कृतम् ॥ ०१७ ॥

स नः शाधि मनुष्येन्द्र अत ऊर्ध्वं विशां पते ॥ ०१७ ॥

अन्वेषणे पाण्डवानां भूयः किं करवामहे ।
इमां च नः प्रियामीक्ष वाचं भद्रवतीं शुभाम् ॥ ०१८ ॥

येन त्रिगर्ता निकृता बलेन महता नृप ।
सूतेन राज्ञो मत्स्यस्य कीचकेन महात्मना ॥ ०१९ ॥

स हतः पतितः शेते गन्धर्वैर्निशि भारत ।
अदृश्यमानैर्दुष्टात्मा सह भ्रातृभिरच्युत ॥ ०२० ॥

प्रियमेतदुपश्रुत्य शत्रूणां तु पराभवम् ।
कृतकृत्यश्च कौरव्य विधत्स्व यदनन्तरम् ॥ ०२१ ॥

---

# अध्याय ०२५

वैशंपायन उवाच ॥

ततो दुर्योधनो राजा श्रुत्वा तेषां वचस्तदा ।
चिरमन्तर्मना भूत्वा प्रत्युवाच सभासदः ॥ ००१ ॥

सुदुःखा खलु कार्याणां गतिर्विज्ञातुमन्ततः ।
तस्मात्सर्वे उदीक्षध्वं क्व नु स्युः पाण्डवा गताः ॥ ००२ ॥

अल्पावशिष्टं कालस्य गतभूयिष्ठमन्ततः ।
तेषामज्ञातचर्यायामस्मिन्वर्षे त्रयोदशे ॥ ००३ ॥

अस्य वर्षस्य शेषं चेद्व्यतीयुरिह पाण्डवाः ।
निवृत्तसमयास्ते हि सत्यव्रतपरायणाः ॥ ००४ ॥

क्षरन्त इव नागेन्द्राः सर्व आशीविषोपमाः ।
दुःखा भवेयुः संरब्धाः कौरवान्प्रति ते ध्रुवम् ॥ ००५ ॥

अर्वाक्कालस्य विज्ञाताः कृच्छ्ररूपधराः पुनः ।
प्रविशेयुर्जितक्रोधास्तावदेव पुनर्वनम् ॥ ००६ ॥

तस्मात्क्षिप्रं बुभुत्सध्वं यथा नोऽत्यन्तमव्ययम् ।
राज्यं निर्द्वन्द्वमव्यग्रं निःसपत्नं चिरं भवेत् ॥ ००७ ॥

अथाब्रवीत्ततः कर्णः क्षिप्रं गच्छन्तु भारत ।
अन्ये धूर्ततरा दक्षा निभृताः साधुकारिणः ॥ ००८ ॥

चरन्तु देशान्संवीताः स्फीताञ्जनपदाकुलान् ।
तत्र गोष्ठीष्वथान्यासु सिद्धप्रव्रजितेषु च ॥ ००९ ॥

परिचारेषु तीर्थेषु विविधेष्वाकरेषु च ।
विज्ञातव्या मनुष्यैस्तैस्तर्कया सुविनीतया ॥ ०१० ॥

विविधैस्तत्परैः सम्यक्तज्ज्ञैर्निपुणसंवृतैः ।

अन्वेष्टव्याश्च निपुणं पाण्डवाश्छन्नवासिनः ॥ ०११ ॥

नदीकुञ्जेषु तीर्थेषु ग्रामेषु नगरेषु च ।
आश्रमेषु च रम्येषु पर्वतेषु गुहासु च ॥ ०१२ ॥

अथाग्रजानन्तरजः पापभावानुरागिणम् ।
ज्येष्ठं दुःशासनस्तत्र भ्राता भ्रातरमब्रवीत् ॥ ०१३ ॥

एतच्च कर्णो यत्प्राह सर्वमीक्षामहे तथा ।
यथोद्दिष्टं चराः सर्वे मृगयन्तु ततस्ततः ॥ ०१४ ॥

एते चान्ये च भूयांसो देशाद्देशं यथाविधि ॥ ०१४ ॥

न तु तेषां गतिर्वासः प्रवृत्तिश्चोपलभ्यते ।
अत्याहितं वा गूढास्ते पारं वोर्मिमतो गताः ॥ ०१५ ॥

व्यालैर्वापि महारण्ये भक्षिताः शूरमानिनः ।
अथ वा विषमं प्राप्य विनष्टाः शाश्वतीः समाः ॥ ०१६ ॥

तस्मान्मानसमव्यग्रं कृत्वा त्वं कुरुनन्दन ।
कुरु कार्यं यथोत्साहं मन्यसे यन्नराधिप ॥ ०१७ ॥

---

# अध्याय ०२६

वैशंपायन उवाच ॥

अथाब्रवीन्महावीर्यो द्रोणस्तत्त्वार्थदर्शिवान् ।
न तादृशा विनश्यन्ति नापि यान्ति पराभवम् ॥ ००१ ॥

शूराश्च कृतविद्याश्च बुद्धिमन्तो जितेन्द्रियाः ।
धर्मज्ञाश्च कृतज्ञाश्च धर्मराजमनुव्रताः ॥ ००२ ॥

नीतिधर्मार्थतत्त्वज्ञं पितृवच्च समाहितम् ।
धर्मे स्थितं सत्यधृतिं ज्येष्ठं ज्येष्ठापचायिनम् ॥ ००३ ॥

अनुव्रता महात्मानं भ्रातरं भ्रातरो नृप ।
अजातशत्रुं ह्रीमन्तं तं च भ्रातृननुव्रतम् ॥ ००४ ॥

तेषां तथा विधेयानां निभृतानां महात्मनाम् ।
किमर्थं नीतिमान्पार्थः श्रेयो नैषां करिष्यति ॥ ००५ ॥

तस्माद्यत्नात्प्रतीक्षन्ते कालस्योदयमागतम् ।
न हि ते नाशमृच्छेयुरिति पश्याम्यहं धिया ॥ ००६ ॥

सांप्रतं चैव यत्कार्यं तच्च क्षिप्रमकालिकम् ।
क्रियतां साधु सञ्चिन्त्य वासश्चैषां प्रचिन्त्यताम् ॥ ००७ ॥

यथावत्पाण्डुपुत्राणां सर्वार्थेषु धृतात्मनाम् ।
दुर्ज्ञेयाः खलु शूरास्ते अपापास्तपसा वृताः ॥ ००८ ॥

शुद्धात्मा गुणवान्पार्थः सत्यवान्नीतिमाञ्शुचिः ।
तेजोराशिरसंख्येयो गृह्णीयादपि चक्षुषी ॥ ००९ ॥

विज्ञाय क्रियतां तस्माद्भूयश्च मृगयामहे ।
ब्राह्मणैश्चारकैः सिद्धैर्ये चान्ये तद्विदो जनाः ॥ ०१० ॥

# अध्याय ०२७

वैशंपायन उवाच ॥

ततः शांतनवो भीष्मो भरतानां पितामहः ।
श्रुतवान्देशकालज्ञस्तत्त्वज्ञः सर्वधर्मवित् ॥ ००१ ॥

आचार्यवाक्योपरमे तद्वाक्यमभिसंदधत् ।
हितार्थं स उवाचेमां भारतीं भारतान्प्रति ॥ ००२ ॥

युधिष्ठिरे समासक्तां धर्मज्ञे धर्मसंश्रिताम् ।
असत्सु दुर्लभां नित्यं सतां चाभिमतां सदा ॥ ००३ ॥

भीष्मः समवदत्तत्र गिरं साधुभिरर्चिताम् ॥ ००३ ॥

यथैष ब्राह्मणः प्राह द्रोणः सर्वार्थतत्त्ववित् ।
सर्वलक्षणसंपन्ना नाशं नार्हन्ति पाण्डवाः ॥ ००४ ॥

श्रुतवृत्तोपसंपन्नाः साधुव्रतसमन्विताः ।
वृद्धानुशासने मग्नाः सत्यव्रतपरायणाः ॥ ००५ ॥

समयं समयज्ञास्ते पालयन्तः शुचिव्रताः ।
नावसीदितुमर्हन्ति उद्वहन्तः सतां धुरम् ॥ ००६ ॥

धर्मतश्चैव गुप्तास्ते स्ववीर्येण च पाण्डवाः ।
न नाशमधिगच्छेयुरिति मे धीयते मतिः ॥ ००७ ॥

तत्र बुद्धिं प्रणेष्यामि पाण्डवान्प्रति भारत ।
न तु नीतिः सुनीतस्य शक्यतेऽन्वेषितुं परैः ॥ ००८ ॥

यत्तु शक्यमिहास्माभिस्तान्वै सञ्चिन्त्य पाण्डवान् ।

बुद्ध्या प्रवक्तुं न द्रोहात्प्रवक्ष्यामि निबोध तत् ॥ ००९ ॥

सा त्वियं साधु वक्तव्या न त्वनीतिः कथञ्चन ।
वृद्धानुशासने तात तिष्ठतः सत्यशीलिनः ॥ ०१० ॥

अवश्यं त्विह धीरेण सतां मध्ये विवक्षता ।
यथामति विवक्तव्यं सर्वशो धर्मलिप्सया ॥ ०११ ॥

तत्र नाहं तथा मन्ये यथायमितरो जनः ।
पुरे जनपदे वापि यत्र राजा युधिष्ठिरः ॥ ०१२ ॥

नासूयको न चापीर्षुर्नातिवादी न मत्सरी ।
भविष्यति जनस्तत्र स्वं स्वं धर्ममनुव्रतः ॥ ०१३ ॥

ब्रह्मघोषाश्च भूयांसः पूर्णाहुत्यस्तथैव च ।
क्रतवश्च भविष्यन्ति भूयांसो भूरिदक्षिणाः ॥ ०१४ ॥

सदा च तत्र पर्जन्यः सम्यग्वर्षी न संशयः ।
संपन्नसस्या च मही निरीतीका भविष्यति ॥ ०१५ ॥

रसवन्ति च धान्यानि गुणवन्ति फलानि च ।
गन्धवन्ति च माल्यानि शुभशब्दा च भारती ॥ ०१६ ॥

वायुश्च सुखसंस्पर्शो निष्प्रतीपं च दर्शनम् ।
भयं नाभ्याविशेत्तत्र यत्र राजा युधिष्ठिरः ॥ ०१७ ॥

गावश्च बहुलास्तत्र न कृशा न च दुर्दुहाः ।
पयांसि दधिसर्पींषि रसवन्ति हितानि च ॥ ०१८ ॥

गुणवन्ति च पानानि भोज्यानि रसवन्ति च ।
तत्र देशे भविष्यन्ति यत्र राजा युधिष्ठिरः ॥ ०१९ ॥

रसाः स्पर्शाश्च गन्धाश्च शब्दाश्चापि गुणान्विताः ।
दृश्यानि च प्रसन्नानि यत्र राजा युधिष्ठिरः ॥ ०२० ॥

स्वैः स्वैर्गुणैः सुसंयुक्तास्तस्मिन्वर्षे त्रयोदशे ।
देशे तस्मिन्भविष्यन्ति तात पाण्डवसंयुते ॥ ०२१ ॥

संप्रीतिमाञ्जनस्तत्र संतुष्टः शुचिरव्ययः ।
देवतातिथिपूजासु सर्वभूतानुरागवान् ॥ ०२२ ॥

इष्टदानो महोत्साहः शश्वद्धर्मपरायणः ।
अशुभद्विड्शुभप्रेप्सुर्नित्ययज्ञः शुभव्रतः ॥ ०२३ ॥

भविष्यति जनस्तत्र यत्र राजा युधिष्ठिरः ॥ ०२३ ॥

त्यक्तवाक्यानृतस्तात शुभकल्याणमङ्गलः ।
शुभार्थेप्सुः शुभमतिर्यत्र राजा युधिष्ठिरः ॥ ०२४ ॥

भविष्यति जनस्तत्र नित्यं चेष्टप्रियव्रतः ॥ ०२४ ॥

धर्मात्मा स तदादृश्यः सोऽपि तात द्विजातिभिः ।
किं पुनः प्राकृतैः पार्थः शक्यो विज्ञातुमन्ततः ॥ ०२५ ॥

यस्मिन्सत्यं धृतिर्दानं परा शान्तिर्ध्रुवा क्षमा ।
ह्रीः श्रीः कीर्तिः परं तेज आनृशंस्यमथार्जवम् ॥ ०२६ ॥

तस्मात्तत्र निवासं तु छन्नं सत्रेण धीमतः ।
गतिं वा परमां तस्य नोत्सहे वक्तुमन्यथा ॥ ०२७ ॥

एवमेतत्तु सञ्चिन्त्य यत्कृतं मन्यसे हितम् ।
तत्क्षिप्रं कुरु कौरव्य यद्येवं श्रद्दधासि मे ॥ ०२८ ॥

# अध्याय ०२८

वैशंपायन उवाच ॥

ततः शारद्वतो वाक्यमित्युवाच कृपस्तदा ।
युक्तं प्राप्तं च वृद्धेन पाण्डवान्प्रति भाषितम् ॥ ००१ ॥

धर्मार्थसहितं श्लक्ष्णं तत्त्वतश्च सहेतुमत् ।
तत्रानुरूपं भीष्मेण ममाप्यत्र गिरं शृणु ॥ ००२ ॥

तेषां चैव गतिस्तीर्थैर्वासश्चैषां प्रचिन्त्यताम् ।
नीतिर्विधीयतां चापि सांप्रतं या हिता भवेत् ॥ ००३ ॥

नावज्ञेयो रिपुस्तात प्राकृतोऽपि बुभूषता ।
किं पुनः पाण्डवास्तात सर्वास्त्रकुशला रणे ॥ ००४ ॥

तस्मात्सत्रं प्रविष्टेषु पाण्डवेषु महात्मसु ।
गूढभावेषु छन्नेषु काले चोदयमागते ॥ ००५ ॥

स्वराष्ट्रपरराष्ट्रेषु ज्ञातव्यं बलमात्मनः ।
उदये पाण्डवानां च प्राप्ते काले न संशयः ॥ ००६ ॥

निवृत्तसमयाः पार्था महात्मानो महाबलाः ।
महोत्साहा भविष्यन्ति पाण्डवा ह्यतितेजसः ॥ ००७ ॥

तस्माद्बलं च कोशं च नीतिश्चापि विधीयताम् ।
यथा कालोदये प्राप्ते सम्यक्तैः संदधामहे ॥ ००८ ॥

तात मन्यामि तत्सर्वं बुध्यस्व बलमात्मनः ।
नियतं सर्वमित्रेषु बलवत्स्वबलेषु च ॥ ००९ ॥

उच्चावचं बलं ज्ञात्वा मध्यस्थं चापि भारत ।
प्रहृष्टमप्रहृष्टं च संदधाम तथा परैः ॥ ०१० ॥

साम्ना भेदेन दानेन दण्डेन बलिकर्मणा ।
न्यायेनानम्य च परान्बलाच्चानम्य दुर्बलान् ॥ ०११ ॥

सान्त्वयित्वा च मित्राणि बलं चाभाष्यतां सुखम् ।
सकोशबलसंवृद्धः सम्यक्सिद्धिमवाप्स्यसि ॥ ०१२ ॥

योत्स्यसे चापि बलिभिररिभिः प्रत्युपस्थितैः ।
अन्यैस्त्वं पाण्डवैर्वापि हीनस्वबलवाहनैः ॥ ०१३ ॥

एवं सर्वं विनिश्चित्य व्यवसायं स्वधर्मतः ।
यथाकालं मनुष्येन्द्र चिरं सुखमवाप्स्यसि ॥ ०१४ ॥

---

# अध्याय ०२९

वैशंपायन उवाच ॥

अथ राजा त्रिगर्तानां सुशर्मा रथयूथपः ।
प्राप्तकालमिदं वाक्यमुवाच त्वरितो भृशम् ॥ ००१ ॥

असकृन्निकृतः पूर्वं मत्स्यैः साल्वेयकैः सह ।
सूतेन चैव मत्स्यस्य कीचकेन पुनः पुनः ॥ ००२ ॥

बाधितो बन्धुभिः सार्धं बलाद्बलवता विभो ।
स कर्णमभ्युदीक्ष्याथ दुर्योधनमभाषत ॥ ००३ ॥

असकृन्मत्स्यराज्ञा मे राष्ट्रं बाधितमोजसा ।
प्रणेता कीचकश्चास्य बलवानभवत्पुरा ॥ ००४ ॥

क्रूरोऽमर्षी स दुष्टात्मा भुवि प्रख्यातविक्रमः ।
निहतस्तत्र गन्धर्वैः पापकर्मा नृशंसवान् ॥ ००५ ॥

तस्मिंश्च निहते राजन्हीनदर्पो निराश्रयः ।
भविष्यति निरुत्साहो विराट इति मे मतिः ॥ ००६ ॥

तत्र यात्रा मम मता यदि ते रोचतेऽनघ ।
कौरवाणां च सर्वेषां कर्णस्य च महात्मनः ॥ ००७ ॥

एतत्प्राप्तमहं मन्ये कार्यमात्ययिकं हितम् ।
राष्ट्रं तस्याभियात्वाशु बहुधान्यसमाकुलम् ॥ ००८ ॥

आददामोऽस्य रत्नानि विविधानि वसूनि च ।
ग्रामान्राष्ट्राणि वा तस्य हरिष्यामो विभागशः ॥ ००९ ॥

अथ वा गोसहस्राणि बहूनि च शुभानि च ।
विविधानि हरिष्यामः प्रतिपीड्य पुरं बलात् ॥ ०१० ॥

कौरवैः सह सङ्गम्य त्रिगर्तैश्च विशां पते ।
गास्तस्यापहरामाशु सह सर्वैः सुसंहताः ॥ ०११ ॥

संधिं वा तेन कृत्वा तु निबध्नीमोऽस्य पौरुषम् ।
हत्वा चास्य चमूं कृत्स्नां वशमन्वानयामहे ॥ ०१२ ॥

तं वशे न्यायतः कृत्वा सुखं वत्स्यामहे वयम् ।
भवतो बलवृद्धिश्च भविष्यति न संशयः ॥ ०१३ ॥

तच्छ्रुत्वा वचनं तस्य कर्णो राजानमब्रवीत् ।
सूक्तं सुशर्मणा वाक्यं प्राप्तकालं हितं च नः ॥ ०१४ ॥

तस्मात्क्षिप्रं विनिर्यामो योजयित्वा वरूथिनीम् ।
विभज्य चाप्यनीकानि यथा वा मन्यसेऽनघ ॥ ०१५ ॥

प्रज्ञावान्कुरुवृद्धोऽयं सर्वेषां नः पितामहः ।
आचार्यश्च तथा द्रोणः कृपः शारद्वतस्तथा ॥ ०१६ ॥

मन्यन्ते ते यथा सर्वे तथा यात्रा विधीयताम् ।
संमन्त्र्य चाशु गच्छामः साधनार्थं महीपतेः ॥ ०१७ ॥

किं च नः पाण्डवैः कार्यं हीनार्थबलपौरुषैः ।
अत्यर्थं वा प्रनष्टास्ते प्राप्ता वापि यमक्षयम् ॥ ०१८ ॥

यामो राजन्ननुद्विग्ना विराटविषयं वयम् ।
आदास्यामो हि गास्तस्य विविधानि वसूनि च ॥ ०१९ ॥

ततो दुर्योधनो राजा वाक्यमादाय तस्य तत् ।
वैकर्तनस्य कर्णस्य क्षिप्रमाज्ञापयत्स्वयम् ॥ ०२० ॥

शासने नित्यसंयुक्तं दुःशासनमनन्तरम् ।
सह वृद्धैस्तु संमन्त्र्य क्षिप्रं योजय वाहिनीम् ॥ ०२१ ॥

यथोद्देशं च गच्छामः सहिताः सर्वकौरवैः ।
सुशर्मा तु यथोद्दिष्टं देशं यातु महारथः ॥ ०२२ ॥

त्रिगर्तैः सहितो राजा समग्रबलवाहनः ।

प्रागेव हि सुसंवीतो मत्स्यस्य विषयं प्रति ॥ ०२३ ॥

जघन्यतो वयं तत्र यास्यामो दिवसान्तरम् ।
विषयं मत्स्यराजस्य सुसमृद्धं सुसंहताः ॥ ०२४ ॥

ते यात्वा सहसा तत्र विराटनगरं प्रति ।
क्षिप्रं गोपान्समासाद्य गृह्णन्तु विपुलं धनम् ॥ ०२५ ॥

गवां शतसहस्राणि श्रीमन्ति गुणवन्ति च ।
वयमपि निगृह्णीमो द्विधा कृत्वा वरूथिनीम् ॥ ०२६ ॥

स स्म गत्वा यथोद्दिष्टां दिशं वह्नेर्महीपतिः ।
आदत्त गाः सुशर्माथ घर्मपक्षस्य सप्तमीम् ॥ ०२७ ॥

अपरं दिवसं सर्वे राजन्संभूय कौरवाः ।
अष्टम्यां तान्यगृह्णन्त गोकुलानि सहस्रशः ॥ ०२८ ॥

---

# अध्याय ०३०

वैशंपायन उवाच ॥

ततस्तेषां महाराज तत्रैवामिततेजसाम् ।
छद्मलिङ्गप्रविष्टानां पाण्डवानां महात्मनाम् ॥ ००१ ॥

व्यतीतः समयः सम्यग्वसतां वै पुरोत्तमे ।
कुर्वतां तस्य कर्माणि विराटस्य महीपतेः ॥ ००२ ॥

ततस्त्रयोदशस्यान्ते तस्य वर्षस्य भारत ।

सुशर्मणा गृहीतं तु गोधनं तरसा बहु ॥ ००३ ॥

ततो जवेन महता गोपाः पुरमथाव्रजत् ।
अपश्यन्मत्स्यराजं च रथात्प्रस्कन्द्य कुण्डली ॥ ००४ ॥

शूरैः परिवृतं योधैः कुण्डलाङ्गदधारिभिः ।
सद्भिश्च मन्त्रिभिः सार्धं पाण्डवैश्च नरर्षभैः ॥ ००५ ॥

तं सभायां महाराजमासीनं राष्ट्रवर्धनम् ।
सोऽब्रवीदुपसङ्गम्य विराटं प्रणतस्तदा ॥ ००६ ॥

अस्मान्युधि विनिर्जित्य परिभूय सबान्धवान् ।
गवां शतसहस्राणि त्रिगर्ताः कालयन्ति ते ॥ ००७ ॥

तान्परीप्स मनुष्येन्द्र मा नेशुः पशवस्तव ॥ ००७ ॥

तच्छ्रुत्वा नृपतिः सेनां मत्स्यानां समयोजयत् ।
रथनागाश्वकलिलां पत्तिध्वजसमाकुलाम् ॥ ००८ ॥

राजानो राजपुत्राश्च तनुत्राण्यत्र भेजिरे ।
भानुमन्ति विचित्राणि सूपसेव्यानि भागशः ॥ ००९ ॥

सवज्रायसगर्भं तु कवचं तप्तकाञ्चनम् ।
विराटस्य प्रियो भ्राता शतानीकोऽभ्यहारयत् ॥ ०१० ॥

सर्वपारसवं वर्म कल्याणपटलं दृढम् ।
शतानीकादवरजो मदिराश्वोऽभ्यहारयत् ॥ ०११ ॥

शतसूर्यं शतावर्तं शतबिन्दु शताक्षिमत् ।
अभेद्यकल्पं मत्स्यानां राजा कवचमाहरत् ॥ ०१२ ॥

उत्सेधे यस्य पद्मानि शतं सौगन्धिकानि च ।
सुवर्णपृष्ठं सूर्याभं सूर्यदत्तोऽभ्यहारयत् ॥ ०१३ ॥

दृढमायसगर्भं तु श्वेतं वर्म शताक्षिमत् ।
विराटस्य सुतो ज्येष्ठो वीरः शङ्खोऽभ्यहारयत् ॥ ०१४ ॥

शतशश्च तनुत्राणि यथास्वानि महारथाः ।
योत्स्यमानाभ्यनह्यन्त देवरूपाः प्रहारिणः ॥ ०१५ ॥

सूपस्करेषु शुभ्रेषु महत्सु च महारथाः ।
पृथक्काञ्चनसंनाहान्रथेष्वश्वानयोजयन् ॥ ०१६ ॥

सूर्यचन्द्रप्रतीकाशो रथे दिव्ये हिरण्मयः ।
महानुभावो मत्स्यस्य ध्वज उच्छिश्रिये तदा ॥ ०१७ ॥

अथान्यान्विविधाकारान्ध्वजान्हेमविभूषितान् ।
यथास्वं क्षत्रियाः शूरा रथेषु समयोजयन् ॥ ०१८ ॥

अथ मत्स्योऽब्रवीद्राजा शतानीकं जघन्यजम् ।
कङ्कबल्लवगोपाला दामग्रन्थिश्च वीर्यवान् ॥ ०१९ ॥

युध्येयुरिति मे बुद्धिर्वर्तते नात्र संशयः ॥ ०१९ ॥

एतेषामपि दीयन्तां रथा ध्वजपताकिनः ।
कवचानि विचित्राणि दृढानि च मृदूनि च ॥ ०२० ॥

प्रतिमुञ्चन्तु गात्रेषु दीयन्तामायुधानि च ॥ ०२० ॥

वीराङ्गरूपाः पुरुषा नागराजकरोपमाः ।
नेमे जातु न युध्येरन्निति मे धीयते मतिः ॥ ०२१ ॥

एतच्छ्रुत्वा तु नृपतेर्वाक्यं त्वरितमानसः ।

शतानीकस्तु पार्थेभ्यो रथान्राजन्समादिशत्  ॥ ०२२  ॥

सहदेवाय राज्ञे च भीमाय नकुलाय च  ॥ ०२२  ॥

तान्प्रहृष्टास्ततः सूता राजभक्तिपुरस्कृताः ।
निर्दिष्टान्नरदेवेन रथाञ्शीघ्रमयोजयन्  ॥ ०२३  ॥

कवचानि विचित्राणि दृढानि च मृदूनि च ।
विराटः प्रादिशद्यानि तेषामक्लिष्टकर्मणाम्  ॥ ०२४  ॥

तान्यामुच्य शरीरेषु दंशितास्ते परंतपाः  ॥ ०२४  ॥

तरस्विनश्छन्नरूपाः सर्वे युद्धविशारदाः ।
विराटमन्वयुः पश्चात्सहिताः कुरुपुङ्गवाः  ॥ ०२५  ॥

चत्वारो भ्रातरः शूराः पाण्डवाः सत्यविक्रमाः  ॥ ०२५  ॥

भीमाश्च मत्तमातङ्गाः प्रभिन्नकरटामुखाः ।
क्षरन्त इव जीमूताः सुदन्ताः षष्टिहायनाः  ॥ ०२६  ॥

स्वारूढा युद्धकुशलैः शिक्षितैर्हस्तिसादिभिः ।
राजानमन्वयुः पश्चाच्चलन्त इव पर्वताः  ॥ ०२७  ॥

विशारदानां वश्यानां हृष्टानां चानुयायिनाम् ।
अष्टौ रथसहस्राणि दश नागशतानि च  ॥ ०२८  ॥

षष्टिश्चाश्वसहस्राणि मत्स्यानामभिनिर्ययुः  ॥ ०२८  ॥

तदनीकं विराटस्य शुशुभे भरतर्षभ ।
संप्रयातं महाराज निनीषन्तं गवां पदम्  ॥ ०२९  ॥

तद्बलाग्र्यं विराटस्य संप्रस्थितमशोभत ।
दृढायुधजनाकीर्णं गजाश्वरथसङ्कुलम् ॥ ०३० ॥

---

# अध्याय ०३१

वैशंपायन उवाच ॥

निर्याय नगराच्छूरा व्यूढानीकाः प्रहारिणः ।
त्रिगर्तानस्पृशन्मत्स्याः सूर्ये परिणते सति ॥ ००१ ॥

ते त्रिगर्ताश्च मत्स्याश्च संरब्धा युद्धदुर्मदाः ।
अन्योन्यमभिगर्जन्तो गोषु गृद्धा महाबलाः ॥ ००२ ॥

भीमाश्च मत्तमातङ्गास्तोमराङ्कुशचोदिताः ।
ग्रामणीयैः समारूढाः कुशलैर्हस्तिसादिभिः ॥ ००३ ॥

तेषां समागमो घोरस्तुमुलो लोमहर्षणः ।
देवासुरसमो राजन्नासीत्सूर्ये विलम्बति ॥ ००४ ॥

उदतिष्ठद्रजो भौमं न प्रज्ञायत किञ्चन ।
पक्षिणश्चापतन्भूमौ सैन्येन रजसावृताः ॥ ००५ ॥

इषुभिर्व्यतिसंयद्भिरादित्योऽन्तरधीयत ।
खद्योतैरिव संयुक्तमन्तरिक्षं व्यराजत ॥ ००६ ॥

रुक्मपृष्ठानि चापानि व्यतिषक्तानि धन्विनाम् ।
पततां लोकवीराणां सव्यदक्षिणमस्यताम् ॥ ००७ ॥

रथा रथैः समाजग्मुः पादातैश्च पदातयः ।
सादिभिः सादिनश्चैव गजैश्चापि महागजाः ॥ ००८ ॥

असिभिः पट्टिशैः प्रासैः शक्तिभिस्तोमरैरपि ।
संरब्धाः समरे राजन्निजघ्नुरितरेतरम् ॥ ००९ ॥

निघ्नन्तः समरेऽन्योन्यं शूराः परिघबाहवः ।
न शेकुरभिसंरब्धाः शूरान्कर्तुं पराङ्मुखान् ॥ ०१० ॥

क्लृप्तोत्तरोष्ठं सुनसं क्लृप्तकेशमलङ्कृतम् ।
अदृश्यत शिरश्छिन्नं रजोध्वस्तं सकुण्डलम् ॥ ०११ ॥

अदृश्यंस्तत्र गात्राणि शरैश्छिन्नानि भागशः ।
शालस्कन्धनिकाशानि क्षत्रियाणां महामृधे ॥ ०१२ ॥

नागभोगनिकाशैश्च बाहुभिश्चन्दनोक्षितैः ।
आकीर्णा वसुधा तत्र शिरोभिश्च सकुण्डलैः ॥ ०१३ ॥

उपशाम्यद्रजो भौमं रुधिरेण प्रसर्पता ।
कश्मलं प्राविशद्घोरं निर्मर्यादमवर्तत ॥ ०१४ ॥

शतानीकः शतं हत्वा विशालाक्षश्चतुःशतम् ।
प्रविष्टौ महतीं सेनां त्रिगर्तानां महारथौ ॥ ०१५ ॥

आर्च्छेतां बहुसंरब्धौ केशाकेशि नखानखि ॥ ०१५ ॥

लक्षयित्वा त्रिगर्तानां तौ प्रविष्टौ रथव्रजम् ।
जग्मतुः सूर्यदत्तश्च मदिराश्वश्च पृष्ठतः ॥ ०१६ ॥

विराटस्तत्र सङ्ग्रामे हत्वा पञ्चशतान्रथान् ।

हयानां च शतान्यत्र हत्वा पञ्च महारथान् ॥ ०१७ ॥

चरन्स विविधान्मार्गान्रथेषु रथयूथपः ।
त्रिगर्तानां सुशर्माणमार्च्छद्रुक्मरथं रणे ॥ ०१८ ॥

तौ व्यावहरतां तत्र महात्मानौ महाबलौ ।
अन्योन्यमभिगर्जन्तौ गोष्ठे गोवृषभाविव ॥ ०१९ ॥

ततो रथाभ्यां रथिनौ व्यतियाय समन्ततः ।
शरान्व्यसृजतां शीघ्रं तोयधारा घनाविव ॥ ०२० ॥

अन्योन्यं चातिसंरब्धौ विचेरतुरमर्षणौ ।
कृतास्त्रौ निशितैर्बाणैरसिशक्तिगदाभृतौ ॥ ०२१ ॥

ततो राजा सुशर्माणं विव्याध दशभिः शरैः ।
पञ्चभिः पञ्चभिश्चास्य विव्याध चतुरो हयान् ॥ ०२२ ॥

तथैव मत्स्यराजानं सुशर्मा युद्धदुर्मदः ।
पञ्चाशता शितैर्बाणैर्विव्याध परमास्त्रवित् ॥ ०२३ ॥

ततः सैन्यं समावृत्य मत्स्यराजसुशर्मणोः ।
नाभ्यजानंस्तदान्योन्यं प्रदोषे रजसावृते ॥ ०२४ ॥

---

# अध्याय ०३२

वैशंपायन उवाच ॥

तमसाभिप्लुते लोके रजसा चैव भारत ।

व्यतिष्ठन्वै मुहूर्तं तु व्यूढानीकाः प्रहारिणः ॥ ००१ ॥

ततोऽन्धकारं प्रणुदन्नुदतिष्ठत चन्द्रमाः ।
कुर्वाणो विमलां रात्रिं नन्दयन्क्षत्रियान्युधि ॥ ००२ ॥

ततः प्रकाशमासाद्य पुनर्युद्धमवर्तत ।
घोररूपं ततस्ते स्म नावेक्षन्त परस्परम् ॥ ००३ ॥

ततः सुशर्मा त्रैगर्तः सह भ्रात्रा यवीयसा ।
अभ्यद्रवन्मत्स्यराजं रथव्रातेन सर्वशः ॥ ००४ ॥

ततो रथाभ्यां प्रस्कन्द्य भ्रातरौ क्षत्रियर्षभौ ।
गदापाणी सुसंरब्धौ समभ्यद्रवतां हयान् ॥ ००५ ॥

तथैव तेषां तु बलानि तानि; क्रुद्धान्यथान्योन्यमभिद्रवन्ति ।
गदासिखड्गैश्च परश्वधैश्च; प्रासैश्च तीक्ष्णाग्रसुपीतधारैः ॥ ००६ ॥

बलं तु मत्स्यस्य बलेन राजा; सर्वं त्रिगर्ताधिपतिः सुशर्मा ।
प्रमथ्य जित्वा च प्रसह्य मत्स्यं; विराटमोजस्विनमभ्यधावत् ॥ ००७ ॥

तौ निहत्य पृथग्धुर्यावुभौ च पार्ष्णिसारथी ।
विरथं मत्स्यराजानं जीवग्राहमगृह्णताम् ॥ ००८ ॥

तमुन्मथ्य सुशर्मा तु रुदतीं वधुकामिव ।
स्यन्दनं स्वं समारोप्य प्रययौ शीघ्रवाहनः ॥ ००९ ॥

तस्मिन्गृहीते विरथे विराटे बलवत्तरे ।
प्राद्रवन्त भयान्मत्स्यास्त्रिगर्तैरर्दिता भृशम् ॥ ०१० ॥

तेषु संत्रास्यमानेषु कुन्तीपुत्रो युधिष्ठिरः ।
अभ्यभाषन्महाबाहुं भीमसेनमरिंदमम् ॥ ०११ ॥

मत्स्यराजः परामृष्टस्त्रिगर्तेन सुशर्मणा ।
तं मोक्षय महाबाहो न गच्छेद्विषतां वशम्  ॥ ०१२  ॥

उषिताः स्मः सुखं सर्वे सर्वकामैः सुपूजिताः ।
भीमसेन त्वया कार्या तस्य वासस्य निष्कृतिः  ॥ ०१३  ॥

भीमसेन उवाच  ॥

अहमेनं परित्रास्ये शासनात्तव पार्थिव ।
पश्य मे सुमहत्कर्म युध्यतः सह शत्रुभिः  ॥ ०१४  ॥

स्वबाहुबलमाश्रित्य तिष्ठ त्वं भ्रातृभिः सह ।
एकान्तमाश्रितो राजन्पश्य मेऽद्य पराक्रमम्  ॥ ०१५  ॥

सुस्कन्धोऽयं महावृक्षो गदारूप इव स्थितः ।
एनमेव समारुज्य द्रावयिष्यामि शात्रवान्  ॥ ०१६  ॥

वैशंपायन उवाच  ॥

तं मत्तमिव मातङ्गं वीक्षमाणं वनस्पतिम् ।
अब्रवीद्भ्रातरं वीरं धर्मराजो युधिष्ठिरः  ॥ ०१७  ॥

मा भीम साहसं कार्षीस्तिष्ठत्वेष वनस्पतिः ।
मा त्वा वृक्षेण कर्माणि कुर्वाणमतिमानुषम्  ॥ ०१८  ॥

जनाः समवबुध्येरन्भीमोऽयमिति भारत  ॥ ०१८  ॥

अन्यदेवायुधं किञ्चित्प्रतिपद्यस्व मानुषम् ।
चापं वा यदि वा शक्तिं निस्त्रिंशं वा परश्वधम्  ॥ ०१९  ॥

यदेव मानुषं भीम भवेदन्यैरलक्षितम् ।
तदेवायुधमादाय मोक्षयाशु महीपतिम्  ॥ ०२०  ॥

यमौ च चक्ररक्षौ ते भवितारौ महाबलौ ।
व्यूहतः समरे तात मत्स्यराजं परीप्सतः  ॥ ०२१  ॥

ततः समस्तास्ते सर्वे तुरगानभ्यचोदयन् ।
दिव्यमस्त्रं विकुर्वाणास्त्रिगर्तान्प्रत्यमर्षणाः  ॥ ०२२  ॥

तान्निवृत्तरथान्दृष्ट्वा पाण्डवान्सा महाचमूः ।
वैराटी परमक्रुद्धा युयुधे परमाद्भुतम्  ॥ ०२३  ॥

सहस्रं न्यवधीत्तत्र कुन्तीपुत्रो युधिष्ठिरः ।
भीमः सप्तशतान्योधान्परलोकमदर्शयत्  ॥ ०२४  ॥

नकुलश्चापि सप्तैव शतानि प्राहिणोच्छरैः  ॥ ०२४  ॥

शतानि त्रीणि शूराणां सहदेवः प्रतापवान् ।
युधिष्ठिरसमादिष्टो निजघ्ने पुरुषर्षभः  ॥ ०२५  ॥

भित्त्वा तां महतीं सेनां त्रिगर्तानां नरर्षभ  ॥ ०२५  ॥

ततो युधिष्ठिरो राजा त्वरमाणो महारथः ।
अभिद्रुत्य सुशर्माणं शरैरभ्यतुदद्भृशम्  ॥ ०२६  ॥

सुशर्मापि सुसङ्क्रुद्धस्त्वरमाणो युधिष्ठिरम् ।
अविध्यन्नवभिर्बाणैश्चतुर्भिश्चतुरो हयान्  ॥ ०२७  ॥

ततो राजन्नाशुकारी कुन्तीपुत्रो वृकोदरः ।
समासाद्य सुशर्माणमश्वानस्य व्यपोथयत्  ॥ ०२८  ॥

पृष्ठगोपौ च तस्याथ हत्वा परमसायकैः ।
अथास्य सारथिं क्रुद्धो रथोपस्थादपाहरत् ॥ ०२९ ॥

चक्ररक्षश्च शूरश्च शोणाश्वो नाम विश्रुतः ।
स भयाद्द्वैरथं दृष्ट्वा त्रैगर्तं प्राजहत्तदा ॥ ०३० ॥

ततो विराटः प्रस्कन्द्य रथादथ सुशर्मणः ।
गदामस्य परामृश्य तमेवाजघ्निवान्बली ॥ ०३१ ॥

स चचार गदापाणिर्वृद्धोऽपि तरुणो यथा ॥ ०३१ ॥

भीमस्तु भीमसङ्काशो रथात्प्रस्कन्द्य कुण्डली ।
त्रिगर्तराजमादत्त सिंहः क्षुद्रमृगं यथा ॥ ०३२ ॥

तस्मिन्गृहीते विरथे त्रिगर्तानां महारथे ।
अभज्यत बलं सर्वं त्रैगर्तं तद्भयातुरम् ॥ ०३३ ॥

निवर्त्य गास्ततः सर्वाः पाण्डुपुत्रा महाबलाः ।
अवजित्य सुशर्माणं धनं चादाय सर्वशः ॥ ०३४ ॥

स्वबाहुबलसंपन्ना ह्रीनिषेधा यतव्रताः ।
सङ्ग्रामशिरसो मध्ये तां रात्रिं सुखिनोऽवसन् ॥ ०३५ ॥

ततो विराटः कौन्तेयानतिमानुषविक्रमान् ।
अर्चयामास वित्तेन मानेन च महारथान् ॥ ०३६ ॥

विराट उवाच ॥

यथैव मम रत्नानि युष्माकं तानि वै तथा ।
कार्यं कुरुत तैः सर्वे यथाकामं यथासुखम् ॥ ०३७ ॥

ददान्यलङ्कृताः कन्या वसूनि विविधानि च ।
मनसश्चाप्यभिप्रेतं यद्वः शत्रुनिबर्हणाः ॥ ०३८ ॥

युष्माकं विक्रमादद्य मुक्तोऽहं स्वस्तिमानिह ।
तस्माद्भवन्तो मत्स्यानामीश्वराः सर्व एव हि ॥ ०३९ ॥

वैशंपायन उवाच ॥

तथाभिवादिनं मत्स्यं कौरवेयाः पृथक्पृथक् ।
ऊचुः प्राञ्जलयः सर्वे युधिष्ठिरपुरोगमाः ॥ ०४० ॥

प्रतिनन्दाम ते वाक्यं सर्वं चैव विशां पते ।
एतेनैव प्रतीताः स्मो यत्त्वं मुक्तोऽद्य शत्रुभिः ॥ ०४१ ॥

अथाब्रवीत्प्रीतमना मत्स्यराजो युधिष्ठिरम् ।
पुनरेव महाबाहुर्विराटो राजसत्तमः ॥ ०४२ ॥

एहि त्वामभिषेक्ष्यामि मत्स्यराजोऽस्तु नो भवान् ॥ ०४२ ॥

मनसश्चाप्यभिप्रेतं यत्ते शत्रुनिबर्हण ।
तत्तेऽहं संप्रदास्यामि सर्वमर्हति नो भवान् ॥ ०४३ ॥

रत्नानि गाः सुवर्णं च मणिमुक्तमथापि वा ।
वैयाघ्रपद्य विप्रेन्द्र सर्वथैव नमोऽस्तु ते ॥ ०४४ ॥

त्वत्कृते ह्यद्य पश्यामि राज्यमात्मानमेव च ।
यतश्च जातः संरम्भः स च शत्रुर्वशं गतः ॥ ०४५ ॥

ततो युधिष्ठिरो मत्स्यं पुनरेवाभ्यभाषत ।
प्रतिनन्दामि ते वाक्यं मनोज्ञं मत्स्य भाषसे ॥ ०४६ ॥

आनृशंस्यपरो नित्यं सुसुखः सततं भव ।
गच्छन्तु दूतास्त्वरितं नगरं तव पार्थिव ॥ ०४७ ॥

सुहृदां प्रियमाख्यातुं घोषयन्तु च ते जयम् ॥ ०४७ ॥

ततस्तद्वचनान्मत्स्यो दूतान्राजा समादिशत् ।
आचक्षध्वं पुरं गत्वा सङ्ग्रामे विजयं मम ॥ ०४८ ॥

कुमाराः समलङ्कृत्य पर्यागच्छन्तु मे पुरात् ।
वादित्राणि च सर्वाणि गणिकाश्च स्वलङ्कृताः ॥ ०४९ ॥

ते गत्वा केवलां रात्रिमथ सूर्योदयं प्रति ।
विराटस्य पुराभ्याशे दूता जयमघोषयन् ॥ ०५० ॥

---

# अध्याय ०३३

वैशंपायन उवाच ॥

याते त्रिगर्ते मत्स्ये तु पशूंस्तान्स्वान्परीप्सति ।
दुर्योधनः सहामात्यो विराटमुपयादथ ॥ ००१ ॥

भीष्मो द्रोणश्च कर्णश्च कृपश्च परमास्त्रवित् ।
द्रौणिश्च सौबलश्चैव तथा दुःशासनः प्रभुः ॥ ००२ ॥

विविंशतिर्विकर्णश्च चित्रसेनश्च वीर्यवान् ।
दुर्मुखो दुःसहश्चैव ये चैवान्ये महारथाः ॥ ००३ ॥

एते मत्स्यानुपागम्य विराटस्य महीपतेः ।

घोषान्विद्राव्य तरसा गोधनं जह्रुरोजसा ॥ ००४ ॥

षष्टिं गवां सहस्राणि कुरवः कालयन्ति ते ।
महता रथवंशेन परिवार्य समन्ततः ॥ ००५ ॥

गोपालानां तु घोषेषु हन्यतां तैर्महारथैः ।
आरावः सुमहानासीत्संप्रहारे भयङ्करे ॥ ००६ ॥

गवाध्यक्षस्तु संत्रस्तो रथमास्थाय सत्वरः ।
जगाम नगरायैव परिक्रोशंस्तदार्तवत् ॥ ००७ ॥

स प्रविश्य पुरं राज्ञो नृपवेश्माभ्ययात्ततः ।
अवतीर्य रथात्तूर्णमाख्यातुं प्रविवेश ह ॥ ००८ ॥

दृष्ट्वा भूमिञ्जयं नाम पुत्रं मत्स्यस्य मानिनम् ।
तस्मै तत्सर्वमाचष्ट राष्ट्रस्य पशुकर्षणम् ॥ ००९ ॥

षष्टिं गवां सहस्राणि कुरवः कालयन्ति ते ।
तद्विजेतुं समुत्तिष्ठ गोधनं राष्ट्रवर्धनम् ॥ ०१० ॥

राजपुत्र हितप्रेप्सुः क्षिप्रं निर्याहि वै स्वयम् ।
त्वां हि मत्स्यो महीपालः शून्यपालमिहाकरोत् ॥ ०११ ॥

त्वया परिषदो मध्ये श्लाघते स नराधिपः ।
पुत्रो ममानुरूपश्च शूरश्चेति कुलोद्वहः ॥ ०१२ ॥

इष्वस्त्रे निपुणो योधः सदा वीरश्च मे सुतः ।
तस्य तत्सत्यमेवास्तु मनुष्येन्द्रस्य भाषितम् ॥ ०१३ ॥

आवर्तय कुरूञ्जित्वा पशून्पशुमतां वर ।
निर्दहैषामनीकानि भीमेन शरतेजसा ॥ ०१४ ॥

धनुश्च्युतै रुक्मपुङ्खैः शरैः संनतपर्वभिः ।
द्विषतां भिन्ध्यनीकानि गजानामिव यूथपः ॥ ०१५ ॥

पाशोपधानां ज्यातन्त्रीं चापदण्डां महास्वनाम् ।
शरवर्णां धनुर्वीणां शत्रुमध्ये प्रवादय ॥ ०१६ ॥

श्वेता रजतसङ्काशा रथे युज्यन्तु ते हयाः ।
ध्वजं च सिंहं सौवर्णमुच्छ्रयन्तु तवाभिभोः ॥ ०१७ ॥

रुक्मपुङ्खाः प्रसन्नाग्रा मुक्ता हस्तवता त्वया ।
छादयन्तु शराः सूर्यं राज्ञामायुर्निरोधिनः ॥ ०१८ ॥

रणे जित्वा कुरून्सर्वान्वज्रपाणिरिवासुरान् ।
यशो महदवाप्य त्वं प्रविशेदं पुरं पुनः ॥ ०१९ ॥

त्वं हि राष्ट्रस्य परमा गतिर्मत्स्यपतेः सुतः ।
गतिमन्तो भवन्त्वद्य सर्वे विषयवासिनः ॥ ०२० ॥

स्त्रीमध्य उक्तस्तेनासौ तद्वाक्यमभयङ्करम् ।
अन्तःपुरे श्लाघमान इदं वचनमब्रवीत् ॥ ०२१ ॥

---

# अध्याय ०३४

उत्तर उवाच ॥

अद्याहमनुगच्छेयं दृढधन्वा गवां पदम् ।
यदि मे सारथिः कश्चिद्भवेदश्वेषु कोविदः ॥ ००१ ॥

तमेव नाधिगच्छामि यो मे यन्ता भवेन्नरः ।
पश्यध्वं सारथिं क्षिप्रं मम युक्तं प्रयास्यतः ॥ ००२ ॥

अष्टाविंशतिरात्रं वा मासं वा नूनमन्ततः ।
यत्तदासीन्महद्युद्धं तत्र मे सारथिर्हतः ॥ ००३ ॥

स लभेयं यदि त्वन्यं हययानविदं नरम् ।
त्वरावानद्य यात्वाहं समुच्छ्रितमहाध्वजम् ॥ ००४ ॥

विगाह्य तत्परानीकं गजवाजिरथाकुलम् ।
शस्त्रप्रतापनिर्वीर्यान्कुरूञ्जित्वानये पशून् ॥ ००५ ॥

दुर्योधनं शांतनवं कर्णं वैकर्तनं कृपम् ।
द्रोणं च सह पुत्रेण महेष्वासान्समागतान् ॥ ००६ ॥

वित्रासयित्वा सङ्ग्रामे दानवानिव वज्रभृत् ।
अनेनैव मुहूर्तेन पुनः प्रत्यानये पशून् ॥ ००७ ॥

शून्यमासाद्य कुरवः प्रयान्त्यादाय गोधनम् ।
किं नु शक्यं मया कर्तुं यदहं तत्र नाभवम् ॥ ००८ ॥

पश्येयुरद्य मे वीर्यं कुरवस्ते समागताः ।
किं नु पार्थोऽर्जुनः साक्षादयमस्मान्प्रबाधते ॥ ००९ ॥

वैशंपायन उवाच ॥

तस्य तद्वचनं स्त्रीषु भाषतः स्म पुनः पुनः ।
नामर्षयत पाञ्चाली बीभत्सोः परिकीर्तनम् ॥ ०१० ॥

अथैनमुपसङ्गम्य स्त्रीमध्यात्सा तपस्विनी ।

व्रीडमानेव शनकैरिदं वचनमब्रवीत् ॥ ०११ ॥

योऽसौ बृहद्वारणाभो युवा सुप्रियदर्शनः ।
बृहन्नडेति विख्यातः पार्थस्यासीत्स सारथिः ॥ ०१२ ॥

धनुष्यनवरश्चासीत्तस्य शिष्यो महात्मनः ।
दृष्टपूर्वो मया वीर चरन्त्या पाण्डवान्प्रति ॥ ०१३ ॥

यदा तत्पावको दावमदहत्खाण्डवं महत् ।
अर्जुनस्य तदानेन सङ्गृहीता हयोत्तमाः ॥ ०१४ ॥

तेन सारथिना पार्थः सर्वभूतानि सर्वशः ।
अजयत्खाण्डवप्रस्थे न हि यन्तास्ति तादृशः ॥ ०१५ ॥

येयं कुमारी सुश्रोणी भगिनी ते यवीयसी ।
अस्याः स वचनं वीर करिष्यति न संशयः ॥ ०१६ ॥

यदि वै सारथिः स स्यात्कुरून्सर्वानसंशयम् ।
जित्वा गाश्च समादाय ध्रुवमागमनं भवेत् ॥ ०१७ ॥

एवमुक्तः स सैरन्ध्र्या भगिनीं प्रत्यभाषत ।
गच्छ त्वमनवद्याङ्गि तामानय बृहन्नडाम् ॥ ०१८ ॥

सा भ्रात्रा प्रेषिता शीघ्रमगच्छन्नर्तनागृहम् ।
यत्रास्ते स महाबाहुश्छन्नः सत्रेण पाण्डवः ॥ ०१९ ॥

# अध्याय ०३५

वैशंपायन उवाच ॥

स तां दृष्ट्वा विशालाक्षीं राजपुत्रीं सखीं सखा ।
प्रहसन्नब्रवीद्राजन्कुत्रागमनमित्युत ॥ ००१ ॥

तमब्रवीद्राजपुत्री समुपेत्य नरर्षभम् ।
प्रणयं भावयन्ती स्म सखीमध्य इदं वचः ॥ ००२ ॥

गावो राष्ट्रस्य कुरुभिः काल्यन्ते नो बृहन्नडे ।
तान्विजेतुं मम भ्राता प्रयास्यति धनुर्धरः ॥ ००३ ॥

नचिरं च हतस्तस्य सङ्ग्रामे रथसारथिः ।
तेन नास्ति समः सूतो योऽस्य सारथ्यमाचरेत् ॥ ००४ ॥

तस्मै प्रयतमानाय सारथ्यर्थं बृहन्नडे ।
आचचक्षे हयज्ञाने सैरन्ध्री कौशलं तव ॥ ००५ ॥

सा सारथ्यं मम भ्रातुः कुरु साधु बृहन्नडे ।
पुरा दूरतरं गावो ह्रियन्ते कुरुभिर्हि नः ॥ ००६ ॥

अथैतद्वचनं मेऽद्य नियुक्ता न करिष्यसि ।
प्रणयादुच्यमाना त्वं परित्यक्ष्यामि जीवितम् ॥ ००७ ॥

एवमुक्तस्तु सुश्रोण्या तया सख्या परंतपः ।
जगाम राजपुत्रस्य सकाशममितौजसः ॥ ००८ ॥

तं सा व्रजन्तं त्वरितं प्रभिन्नमिव कुञ्जरम् ।
अन्वगच्छद्विशालाक्षी शिशुर्गजवधूरिव ॥ ००९ ॥

दूरादेव तु तं प्रेक्ष्य राजपुत्रोऽभ्यभाषत ।
त्वया सारथिना पार्थः खाण्डवेऽग्निमतर्पयत् ॥ ०१० ॥

पृथिवीमजयत्कृत्स्नां कुन्तीपुत्रो धनञ्जयः ।
सैरन्ध्री त्वां समाचष्ट सा हि जानाति पाण्डवान् ॥ ०११ ॥

संयच्छ मामकानश्वांस्तथैव त्वं बृहन्नडे ।
कुरुभिर्योत्स्यमानस्य गोधनानि परीप्सतः ॥ ०१२ ॥

अर्जुनस्य किलासीस्त्वं सारथिर्दयितः पुरा ।
त्वयाजयत्सहायेन पृथिवीं पाण्डवर्षभः ॥ ०१३ ॥

एवमुक्ता प्रत्युवाच राजपुत्रं बृहन्नडा ।
का शक्तिर्मम सारथ्यं कर्तुं सङ्ग्राममूर्धनि ॥ ०१४ ॥

गीतं वा यदि वा नृत्तं वादित्रं वा पृथग्विधम् ।
तत्करिष्यामि भद्रं ते सारथ्यं तु कुतो मयि ॥ ०१५ ॥

उत्तर उवाच ॥

बृहन्नडे गायनो वा नर्तनो वा पुनर्भव ।
क्षिप्रं मे रथमास्थाय निगृह्णीष्व हयोत्तमान् ॥ ०१६ ॥

वैशंपायन उवाच ॥

स तत्र नर्मसंयुक्तमकरोत्पाण्डवो बहु ।
उत्तरायाः प्रमुखतः सर्वं जानन्नरिंदम ॥ ०१७ ॥

ऊर्ध्वमुत्क्षिप्य कवचं शरीरे प्रत्यमुञ्चत ।
कुमार्यस्तत्र तं दृष्ट्वा प्राहसन्पृथुलोचनाः ॥ ०१८ ॥

स तु दृष्ट्वा विमुह्यन्तं स्वयमेवोत्तरस्ततः ।
कवचेन महार्हेण समनह्यद्बृहन्नडाम्  ॥ ०१९  ॥

स बिभ्रत्कवचं चाग्र्यं स्वयमप्यंशुमत्प्रभम् ।
ध्वजं च सिंहमुच्छ्रित्य सारथ्ये समकल्पयत्  ॥ ०२०  ॥

धनूंषि च महार्हाणि बाणांश्च रुचिरान्बहून् ।
आदाय प्रययौ वीरः स बृहन्नडसारथिः  ॥ ०२१  ॥

अथोत्तरा च कन्याश्च सख्यस्तामब्रुवंस्तदा ।
बृहन्नडे आनयेथा वासांसि रुचिराणि नः  ॥ ०२२  ॥

पाञ्चालिकार्थं सूक्ष्माणि चित्राणि विविधानि च ।
विजित्य सङ्ग्रामगतान्भीष्मद्रोणमुखान्कुरून्  ॥ ०२३  ॥

अथ ता ब्रुवतीः कन्याः सहिताः पाण्डुनन्दनः ।
प्रत्युवाच हसन्पार्थो मेघदुन्दुभिनिःस्वनः  ॥ ०२४  ॥

यद्युत्तरोऽयं सङ्ग्रामे विजेष्यति महारथान् ।
अथाहरिष्ये वासांसि दिव्यानि रुचिराणि च  ॥ ०२५  ॥

एवमुक्त्वा तु बीभत्सुस्ततः प्राचोदयद्धयान् ।
कुरूनभिमुखाञ्शूरो नानाध्वजपताकिनः  ॥ ०२६  ॥

---

# अध्याय ०३६

वैशंपायन उवाच  ॥

स राजधान्या निर्याय वैराटिः पृथिवीञ्जयः ।
प्रयाहीत्यब्रवीत्सूतं यत्र ते कुरवो गताः  ॥ ००१  ॥

समवेतान्कुरून्यावज्जिगीषूनवजित्य वै ।
गाश्चैषां क्षिप्रमादाय पुनरायामि स्वं पुरम्  ॥ ००२  ॥

ततस्तांश्चोदयामास सदश्वान्पाण्डुनन्दनः ।
ते हया नरसिंहेन चोदिता वातरंहसः  ॥ ००३  ॥

आलिखन्त इवाकाशमूहुः काञ्चनमालिनः  ॥ ००३  ॥

नातिदूरमथो यात्वा मत्स्यपुत्रधनञ्जयौ ।
अवेक्षेताममित्रघ्नौ कुरूणां बलिनां बलम्  ॥ ००४  ॥

श्मशानमभितो गत्वा आससाद कुरूनथ  ॥ ००४  ॥

तदनीकं महत्तेषां विबभौ सागरस्वनम् ।
सर्पमाणमिवाकाशे वनं बहुलपादपम्  ॥ ००५  ॥

ददृशे पार्थिवो रेणुर्जनितस्तेन सर्पता ।
दृष्टिप्रणाशो भूतानां दिवस्पृङ्नरसत्तम  ॥ ००६  ॥

तदनीकं महद्दृष्ट्वा गजाश्वरथसङ्कुलम् ।
कर्णदुर्योधनकृपैर्गुप्तं शांतनवेन च  ॥ ००७  ॥

द्रोणेन च सपुत्रेण महेष्वासेन धीमता ।
हृष्टरोमा भयोद्विग्नः पार्थं वैराटिरब्रवीत्  ॥ ००८  ॥

नोत्सहे कुरुभिर्योद्धुं रोमहर्षं हि पश्य मे ।
बहुप्रवीरमत्युग्रं देवैरपि दुरासदम्  ॥ ००९  ॥

प्रतियोद्धुं न शक्ष्यामि कुरुसैन्यमनन्तकम्  ॥ ००९  ॥

नाशंसे भारतीं सेनां प्रवेष्टुं भीमकार्मुकाम् ।
रथनागाश्वकलिलां पत्तिध्वजसमाकुलाम्  ॥ ०१०  ॥

दृष्ट्वैव हि परानाजावात्मा प्रव्यथतीव मे  ॥ ०१०  ॥

यत्र द्रोणश्च भीष्मश्च कृपः कर्णो विविंशतिः ।
अश्वत्थामा विकर्णश्च सोमदत्तोऽथ बाह्लिकः  ॥ ०११  ॥

दुर्योधनस्तथा वीरो राजा च रथिनां वरः ।
द्युतिमन्तो महेष्वासाः सर्वे युद्धविशारदाः  ॥ ०१२  ॥

दृष्ट्वैव हि कुरूनेतान्व्यूढानीकान्प्रहारिणः ।
हृषितानि च रोमाणि कश्मलं चागतं मम  ॥ ०१३  ॥

वैशंपायन उवाच  ॥

अवियातो वियातस्य मौर्ख्याद्धूर्तस्य पश्यतः ।
परिदेवयते मन्दः सकाशे सव्यसाचिनः  ॥ ०१४  ॥

त्रिगर्तान्मे पिता यातः शून्ये संप्रणिधाय माम् ।
सर्वां सेनामुपादाय न मे सन्तीह सैनिकाः  ॥ ०१५  ॥

सोऽहमेको बहून्बालः कृतास्त्रानकृतश्रमः ।
प्रतियोद्धुं न शक्ष्यामि निवर्तस्व बृहन्नडे  ॥ ०१६  ॥

अर्जुन उवाच  ॥

भयेन दीनरूपोऽसि द्विषतां हर्षवर्धनः ।
न च तावत्कृतं किञ्चित्परैः कर्म रणाजिरे  ॥ ०१७  ॥

स्वयमेव च मामात्थ वह मां कौरवान्प्रति ।
सोऽहं त्वां तत्र नेष्यामि यत्रैते बहुला ध्वजाः ॥ ०१८ ॥

मध्यमामिषगृध्राणां कुरूणामाततायिनाम् ।
नेष्यामि त्वां महाबाहो पृथिव्यामपि युध्यताम् ॥ ०१९ ॥

तथा स्त्रीषु प्रतिश्रुत्य पौरुषं पुरुषेषु च ।
कत्थमानोऽभिनिर्याय किमर्थं न युयुत्ससे ॥ ०२० ॥

न चेद्विजित्य गास्तास्त्वं गृहान्वै प्रतियास्यसि ।
प्रहसिष्यन्ति वीर त्वां नरा नार्यश्च सङ्गताः ॥ ०२१ ॥

अहमप्यत्र सैरन्ध्र्या स्तुतः सारथ्यकर्मणि ।
न हि शक्ष्याम्यनिर्जित्य गाः प्रयातुं पुरं प्रति ॥ ०२२ ॥

स्तोत्रेण चैव सैरन्ध्र्यास्तव वाक्येन तेन च ।
कथं न युध्येयमहं कुरून्सर्वान्स्थिरो भव ॥ ०२३ ॥

उत्तर उवाच ॥

कामं हरन्तु मत्स्यानां भूयांसं कुरवो धनम् ।
प्रहसन्तु च मां नार्यो नरा वापि बृहन्नडे ॥ ०२४ ॥

वैशंपायन उवाच ॥

इत्युक्त्वा प्राद्रवद्भीतो रथात्प्रस्कन्द्य कुण्डली ।
त्यक्त्वा मानं स मन्दात्मा विसृज्य सशरं धनुः ॥ ०२५ ॥

बृहन्नडोवाच ॥

नैष पूर्वैः स्मृतो धर्मः क्षत्रियस्य पलायनम् ।
श्रेयस्ते मरणं युद्धे न भीतस्य पलायनम्  ॥ ०२६  ॥

वैशंपायन उवाच  ॥

एवमुक्त्वा तु कौन्तेयः सोऽवप्लुत्य रथोत्तमात् ।
तमन्वधावद्धावन्तं राजपुत्रं धनञ्जयः  ॥ ०२७  ॥

दीर्घां वेणीं विधुन्वानः साधु रक्ते च वाससी  ॥ ०२७  ॥

विधूय वेणीं धावन्तमजानन्तोऽर्जुनं तदा ।
सैनिकाः प्राहसन्केचित्तथारूपमवेक्ष्य तम्  ॥ ०२८  ॥

तं शीघ्रमभिधावन्तं संप्रेक्ष्य कुरवोऽब्रुवन् ।
क एष वेषप्रच्छन्नो भस्मनेव हुताशनः  ॥ ०२९  ॥

किञ्चिदस्य यथा पुंसः किञ्चिदस्य यथा स्त्रियः ।
सारूप्यमर्जुनस्येव क्लीबरूपं बिभर्ति च  ॥ ०३०  ॥

तदेवैतच्छिरोग्रीवं तौ बाहू परिघोपमौ ।
तद्वदेवास्य विक्रान्तं नायमन्यो धनञ्जयात्  ॥ ०३१  ॥

अमरेष्विव देवेन्द्रो मानुषेषु धनञ्जयः ।
एकः कोऽस्मानुपायायादन्यो लोके धनञ्जयात्  ॥ ०३२  ॥

एकः पुत्रो विराटस्य शून्ये संनिहितः पुरे ।
स एष किल निर्यातो बालभावान्न पौरुषात्  ॥ ०३३  ॥

सत्रेण नूनं छन्नं हि चरन्तं पार्थमर्जुनम् ।
उत्तरः सारथिं कृत्वा निर्यातो नगराद्बहिः  ॥ ०३४  ॥

स नो मन्ये ध्वजान्दृष्ट्वा भीत एष पलायति ।
तं नूनमेष धावन्तं जिघृक्षति धनञ्जयः ॥ ०३५ ॥

इति स्म कुरवः सर्वे विमृशन्तः पृथक्पृथक् ।
न च व्यवसितुं किञ्चिदुत्तरं शक्नुवन्ति ते ॥ ०३६ ॥

छन्नं तथा तं सत्रेण पाण्डवं प्रेक्ष्य भारत ॥ ०३६ ॥

उत्तरं तु प्रधावन्तमनुद्रुत्य धनञ्जयः ।
गत्वा पदशतं तूर्णं केशपक्षे परामृशत् ॥ ०३७ ॥

सोऽर्जुनेन परामृष्टः पर्यदेवयदार्तवत् ।
बहुलं कृपणं चैव विराटस्य सुतस्तदा ॥ ०३८ ॥

शातकुम्भस्य शुद्धस्य शतं निष्कान्ददामि ते ।
मणीनष्टौ च वैडूर्यान्हेमबद्धान्महाप्रभान् ॥ ०३९ ॥

हेमदण्डप्रतिच्छन्नं रथं युक्तं च सुव्रजैः ।
मत्तांश्च दश मातङ्गान्मुञ्च मां त्वं बृहन्नडे ॥ ०४० ॥

वैशंपायन उवाच ॥

एवमादीनि वाक्यानि विलपन्तमचेतसम् ।
प्रहस्य पुरुषव्याघ्रो रथस्यान्तिकमानयत् ॥ ०४१ ॥

अथैनमब्रवीत्पार्थो भयार्तं नष्टचेतसम् ।
यदि नोत्सहसे योद्धुं शत्रुभिः शत्रुकर्शन ॥ ०४२ ॥

एहि मे त्वं हयान्यच्छ युध्यमानस्य शत्रुभिः ॥ ०४२ ॥

प्रयाह्येतद्रथानीकं मद्बाहुबलरक्षितः ।

अप्रधृष्यतमं घोरं गुप्तं वीरैर्महारथैः ॥ ०४३ ॥

मा भैस्त्वं राजपुत्राग्र्य क्षत्रियोऽसि परंतप ।
अहं वै कुरुभिर्योत्स्याम्यवजेष्यामि ते पशून् ॥ ०४४ ॥

प्रविश्यैतद्रथानीकमप्रधृष्यं दुरासदम् ।
यन्ता भूस्त्वं नरश्रेष्ठ योत्स्येऽहं कुरुभिः सह ॥ ०४५ ॥

एवं ब्रुवाणो बीभत्सुर्वैराटिमपराजितः ।
समाश्वास्य मुहूर्तं तमुत्तरं भरतर्षभ ॥ ०४६ ॥

तत एनं विचेष्टन्तमकामं भयपीडितम् ।
रथमारोपयामास पार्थः प्रहरतां वरः ॥ ०४७ ॥

---

# अध्याय ०३७

वैशंपायन उवाच ॥

तं दृष्ट्वा क्लीबवेषेण रथस्थं नरपुङ्गवम् ।
शमीमभिमुखं यान्तं रथमारोप्य चोत्तरम् ॥ ००१ ॥

भीष्मद्रोणमुखास्तत्र कुरूणां रथसत्तमाः ।
वित्रस्तमनसः सर्वे धनञ्जयकृताद्भयात् ॥ ००२ ॥

तानवेक्ष्य हतोत्साहानुत्पातानपि चाद्भुतान् ।
गुरुः शस्त्रभृतां श्रेष्ठो भारद्वाजोऽभ्यभाषत ॥ ००३ ॥

चलाश्च वाताः संवान्ति रूक्षाः परुषनिःस्वनाः ।
भस्मवर्णप्रकाशेन तमसा संवृतं नभः ॥ ००४ ॥

रूक्षवर्णाश्च जलदा दृश्यन्तेऽद्भुतदर्शनाः ।
निःसरन्ति च कोशेभ्यः शस्त्राणि विविधानि च ॥ ००५ ॥

शिवाश्च विनदन्त्येता दीप्तायां दिशि दारुणाः ।
हयाश्चाश्रूणि मुञ्चन्ति ध्वजाः कम्पन्त्यकम्पिताः ॥ ००६ ॥

यादृशान्यत्र रूपाणि संदृश्यन्ते बहून्यपि ।
यत्ता भवन्तस्तिष्ठन्तु स्याद्युद्धं समुपस्थितम् ॥ ००७ ॥

रक्षध्वमपि चात्मानं व्यूहध्वं वाहिनीमपि ।
वैशसं च प्रतीक्षध्वं रक्षध्वं चापि गोधनम् ॥ ००८ ॥

एष वीरो महेष्वासः सर्वशस्त्रभृतां वरः ।
आगतः क्लीबवेषेण पार्थो नास्त्यत्र संशयः ॥ ००९ ॥

स एष पार्थो विक्रान्तः सव्यसाची परंतपः ।
नायुद्धेन निवर्तेत सर्वैरपि मरुद्गणैः ॥ ०१० ॥

क्लेशितश्च वने शूरो वासवेन च शिक्षितः ।
अमर्षवशमापन्नो योत्स्यते नात्र संशयः ॥ ०११ ॥

नेहास्य प्रतियोद्धारमहं पश्यामि कौरवाः ।
महादेवोऽपि पार्थेन श्रूयते युधि तोषितः ॥ ०१२ ॥

कर्ण उवाच ॥

सदा भवान्फल्गुनस्य गुणैरस्मान्विकत्थसे ।
न चार्जुनः कला पूर्णा मम दुर्योधनस्य वा ॥ ०१३ ॥

दुर्योधन उवाच ॥

यद्येष पार्थो राधेय कृतं कार्यं भवेन्मम ।
ज्ञाताः पुनश्चरिष्यन्ति द्वादशान्यान्हि वत्सरान् ॥ ०१४ ॥

अथैष कश्चिदेवान्यः क्लीबवेषेण मानवः ।
शरैरेनं सुनिशितैः पातयिष्यामि भूतले ॥ ०१५ ॥

वैशंपायन उवाच ॥

तस्मिन्ब्रुवति तद्वाक्यं धार्तराष्ट्रे परंतपे ।
भीष्मो द्रोणः कृपो द्रौणिः पौरुषं तदपूजयन् ॥ ०१६ ॥

---

# अध्याय ०३८

वैशंपायन उवाच ॥

तां शमीमुपसङ्गम्य पार्थो वैराटिमब्रवीत् ।
सुकुमारं समाज्ञातं सङ्ग्रामे नातिकोविदम् ॥ ००१ ॥

समादिष्टो मया क्षिप्रं धनूंष्यवहरोत्तर ।
नेमानि हि त्वदीयानि सोढुं शक्ष्यन्ति मे बलम् ॥ ००२ ॥

भारं वापि गुरुं हर्तुं कुञ्जरं वा प्रमर्दितुम् ।
मम वा बाहुविक्षेपं शत्रूनिह विजेष्यतः ॥ ००३ ॥

तस्माद्भूमिञ्जयारोह शमीमेतां पलाशिनीम् ।

अस्यां हि पाण्डुपुत्राणां धनूंषि निहितान्युत ॥ ००४ ॥

युधिष्ठिरस्य भीमस्य बीभत्सोर्यमयोस्तथा ।
ध्वजाः शराश्च शूराणां दिव्यानि कवचानि च ॥ ००५ ॥

अत्र चैतन्महावीर्यं धनुः पार्थस्य गाण्डिवम् ।
एकं शतसहस्रेण संमितं राष्ट्रवर्धनम् ॥ ००६ ॥

व्यायामसहमत्यर्थं तृणराजसमं महत् ।
सर्वायुधमहामात्रं शत्रुसंबाधकारकम् ॥ ००७ ॥

सुवर्णविकृतं दिव्यं श्लक्ष्णमायतमव्रणम् ।
अलं भारं गुरुं वोढुं दारुणं चारुदर्शनम् ॥ ००८ ॥

तादृशान्येव सर्वाणि बलवन्ति दृढानि च ॥ ००८ ॥

उत्तर उवाच ॥

अस्मिन्वृक्षे किलोद्बद्धं शरीरमिति नः श्रुतम् ।
तदहं राजपुत्रः सन्स्पृशेयं पाणिना कथम् ॥ ००९ ॥

नैवंविधं मया युक्तमालब्धुं क्षत्रयोनिना ।
महता राजपुत्रेण मन्त्रयज्ञविदा सता ॥ ०१० ॥

स्पृष्टवन्तं शरीरं मां शववाहमिवाशुचिम् ।
कथं वा व्यवहार्यं वै कुर्वीथास्त्वं बृहन्नडे ॥ ०११ ॥

बृहन्नडोवाच ॥

व्यवहार्यश्च राजेन्द्र शुचिश्चैव भविष्यसि ।
धनूंष्येतानि मा भैस्त्वं शरीरं नात्र विद्यते ॥ ०१२ ॥

दायादं मत्स्यराजस्य कुले जातं मनस्विनम् ।
कथं त्वा निन्दितं कर्म कारयेयं नृपात्मज ॥ ०१३ ॥

वैशंपायन उवाच ॥

एवमुक्तः स पार्थेन रथात्प्रस्कन्द्य कुण्डली ।
आरुरोह शमीवृक्षं वैराटिरवशस्तदा ॥ ०१४ ॥

तमन्वशासच्छत्रुघ्नो रथे तिष्ठन्धनञ्जयः ।
परिवेष्टनमेतेषां क्षिप्रं चैव व्यपानुद ॥ ०१५ ॥

तथा संनहनान्येषां परिमुच्य समन्ततः ।
अपश्यद्गाण्डिवं तत्र चतुर्भिरपरैः सह ॥ ०१६ ॥

तेषां विमुच्यमानानां धनुषामर्कवर्चसाम् ।
विनिश्चेरुः प्रभा दिव्या ग्रहाणामुदयेष्विव ॥ ०१७ ॥

स तेषां रूपमालोक्य भोगिनामिव जृम्भताम् ।
हृष्टरोमा भयोद्विग्नः क्षणेन समपद्यत ॥ ०१८ ॥

संस्पृश्य तानि चापानि भानुमन्ति बृहन्ति च ।
वैराटिरर्जुनं राजन्निदं वचनमब्रवीत् ॥ ०१९ ॥

उत्तर उवाच ॥

बिन्दवो जातरूपस्य शतं यस्मिन्निपातिताः ।
सहस्रकोटि सौवर्णाः कस्यैतद्धनुरुत्तमम् ॥ ०२० ॥

वारणा यस्य सौवर्णाः पृष्ठे भासन्ति दंशिताः ।
सुपार्श्वं सुग्रहं चैव कस्यैतद्धनुरुत्तमम् ॥ ०२१ ॥

तपनीयस्य शुद्धस्य षष्टिर्यस्येन्द्रगोपकाः ।
पृष्ठे विभक्ताः शोभन्ते कस्यैतद्धनुरुत्तमम्  ॥ ०२२  ॥

सूर्या यत्र च सौवर्णास्त्रयो भासन्ति दंशिताः ।
तेजसा प्रज्वलन्तो हि कस्यैतद्धनुरुत्तमम्  ॥ ०२३  ॥

शालभा यत्र सौवर्णास्तपनीयविचित्रिताः ।
सुवर्णमणिचित्रं च कस्यैतद्धनुरुत्तमम्  ॥ ०२४  ॥

इमे च कस्य नाराचाः सहस्रा लोमवाहिनः ।
समन्तात्कलधौताग्रा उपासङ्गे हिरण्मये  ॥ ०२५  ॥

विपाठाः पृथवः कस्य गार्ध्रपत्राः शिलाशिताः ।
हारिद्रवर्णाः सुनसाः पीताः सर्वायसाः शराः  ॥ ०२६  ॥

कस्यायमसितावापः पञ्चशार्दूललक्षणः ।
वराहकर्णव्यामिश्रः शरान्धारयते दश  ॥ ०२७  ॥

कस्येमे पृथवो दीर्घाः सर्वपारशवाः शराः ।
शतानि सप्त तिष्ठन्ति नाराचा रुधिराशनाः  ॥ ०२८  ॥

कस्येमे शुकपत्राभैः पूर्वैरर्धैः सुवाससः ।
उत्तरैरायसैः पीतैर्हेमपुङ्खैः शिलाशितैः  ॥ ०२९  ॥

कस्यायं सायको दीर्घः शिलीपृष्ठः शिलीमुखः ।
वैयाघ्रकोशे निहितो हेमचित्रत्सरुर्महान्  ॥ ०३०  ॥

सुफलश्चित्रकोशश्च किङ्किणीसायको महान् ।
कस्य हेमत्सरुर्दिव्यः खड्गः परमनिर्व्रणः  ॥ ०३१  ॥

कस्यायं विमलः खड्गो गव्ये कोशे समर्पितः ।
हेमत्सरुरनाधृष्यो नैषध्यो भारसाधनः ॥ ०३२ ॥

कस्य पाञ्चनखे कोशे सायको हेमविग्रहः ।
प्रमाणरूपसंपन्नः पीत आकाशसंनिभः ॥ ०३३ ॥

कस्य हेममये कोशे सुतप्ते पावकप्रभे ।
निस्त्रिंशोऽयं गुरुः पीतः सैक्यः परमनिर्व्रणः ॥ ०३४ ॥

निर्दिशस्व यथातत्त्वं मया पृष्टा बृहन्नडे ।
विस्मयो मे परो जातो दृष्ट्वा सर्वमिदं महत् ॥ ०३५ ॥

बृहन्नडोवाच ॥

यन्मां पूर्वमिहापृच्छः शत्रुसेनानिबर्हणम् ।
गाण्डीवमेतत्पार्थस्य लोकेषु विदितं धनुः ॥ ०३६ ॥

सर्वायुधमहामात्रं शातकुम्भपरिष्कृतम् ।
एतत्तदर्जुनस्यासीद्गाण्डीवं परमायुधम् ॥ ०३७ ॥

यत्तच्छतसहस्रेण संमितं राष्ट्रवर्धनम् ।
येन देवान्मनुष्यांश्च पार्थो विषहते मृधे ॥ ०३८ ॥

देवदानवगन्धर्वैः पूजितं शाश्वतीः समाः ।
एतद्वर्षसहस्रं तु ब्रह्मा पूर्वमधारयत् ॥ ०३९ ॥

ततोऽनन्तरमेवाथ प्रजापतिरधारयत् ।
त्रीणि पञ्चशतं चैव शक्रोऽशीति च पञ्च च ॥ ०४० ॥

सोमः पञ्चशतं राजा तथैव वरुणः शतम् ।
पार्थः पञ्च च षष्टिं च वर्षाणि श्वेतवाहनः ॥ ०४१ ॥

महावीर्यं महद्दिव्यमेतत्तद्धनुरुत्तमम् ।
पूजितं सुरमर्त्येषु बिभर्ति परमं वपुः ॥ ०४२ ॥

सुपार्श्वं भीमसेनस्य जातरूपग्रहं धनुः ।
येन पार्थोऽजयत्कृत्स्नां दिशं प्राचीं परंतपः ॥ ०४३ ॥

इन्द्रगोपकचित्रं च यदेतच्चारुविग्रहम् ।
राज्ञो युधिष्ठिरस्यैतद्वैराटे धनुरुत्तमम् ॥ ०४४ ॥

सूर्या यस्मिंस्तु सौवर्णाः प्रभासन्ते प्रभासिनः ।
तेजसा प्रज्वलन्तो वै नकुलस्यैतदायुधम् ॥ ०४५ ॥

शलभा यत्र सौवर्णास्तपनीयविचित्रिताः ।
एतन्माद्रीसुतस्यापि सहदेवस्य कार्मुकम् ॥ ०४६ ॥

ये त्विमे क्षुरसङ्काशाः सहस्रा लोमवाहिनः ।
एतेऽर्जुनस्य वैराटे शराः सर्पविषोपमाः ॥ ०४७ ॥

एते ज्वलन्तः सङ्ग्रामे तेजसा शीघ्रगामिनः ।
भवन्ति वीरस्याक्षय्या व्यूहतः समरे रिपून् ॥ ०४८ ॥

ये चेमे पृथवो दीर्घाश्चन्द्रबिम्बार्धदर्शनाः ।
एते भीमस्य निशिता रिपुक्षयकराः शराः ॥ ०४९ ॥

हारिद्रवर्णा ये त्वेते हेमपुङ्खाः शिलाशिताः ।
नकुलस्य कलापोऽयं पञ्चशार्दूललक्षणः ॥ ०५० ॥

येनासौ व्यजयत्कृत्स्नां प्रतीचीं दिशमाहवे ।
कलापो ह्येष तस्यासीन्माद्रीपुत्रस्य धीमतः ॥ ०५१ ॥

ये त्विमे भास्कराकाराः सर्वपारशवाः शराः ।
एते चित्राः क्रियोपेताः सहदेवस्य धीमतः  ॥ ०५२  ॥

ये त्विमे निशिताः पीताः पृथवो दीर्घवाससः ।
हेमपुङ्खास्त्रिपर्वाणो राज्ञ एते महाशराः  ॥ ०५३  ॥

यस्त्वयं सायको दीर्घः शिलीपृष्ठः शिलीमुखः ।
अर्जुनस्यैष सङ्ग्रामे गुरुभारसहो दृढः  ॥ ०५४  ॥

वैयाघ्रकोशस्तु महान्भीमसेनस्य सायकः ।
गुरुभारसहो दिव्यः शात्रवाणां भयङ्करः  ॥ ०५५  ॥

सुफलश्चित्रकोशश्च हेमत्सरुरनुत्तमः ।
निस्त्रिंशः कौरवस्यैष धर्मराजस्य धीमतः  ॥ ०५६  ॥

यस्तु पाञ्चनखे कोशे निहितश्चित्रसेवने ।
नकुलस्यैष निस्त्रिंशो गुरुभारसहो दृढः  ॥ ०५७  ॥

यस्त्वयं विमलः खड्गो गव्ये कोशे समर्पितः ।
सहदेवस्य विद्ध्येनं सर्वभारसहं दृढम्  ॥ ०५८  ॥

---

# अध्याय ०३९

उत्तर उवाच  ॥

सुवर्णविकृतानीमान्यायुधानि महात्मनाम् ।
रुचिराणि प्रकाशन्ते पार्थानामाशुकारिणाम्  ॥ ००१  ॥

क्व नु स्विदर्जुनः पार्थः कौरव्यो वा युधिष्ठिरः ।
नकुलः सहदेवश्च भीमसेनश्च पाण्डवः ॥ ००२ ॥

सर्व एव महात्मानः सर्वामित्रविनाशनाः ।
राज्यमक्षैः पराकीर्य न श्रूयन्ते कदाचन ॥ ००३ ॥

द्रौपदी क्व च पाञ्चाली स्त्रीरत्नमिति विश्रुता ।
जितानक्षैस्तदा कृष्णा तानेवान्वगमद्वनम् ॥ ००४ ॥

अर्जुन उवाच ॥

अहमस्म्यर्जुनः पार्थः सभास्तारो युधिष्ठिरः ।
बल्लवो भीमसेनस्तु पितुस्ते रसपाचकः ॥ ००५ ॥

अश्वबन्धोऽथ नकुलः सहदेवस्तु गोकुले ।
सैरन्ध्रीं द्रौपदीं विद्धि यत्कृते कीचका हताः ॥ ००६ ॥

उत्तर उवाच ॥

दश पार्थस्य नामानि यानि पूर्वं श्रुतानि मे ।
प्रब्रूयास्तानि यदि मे श्रद्दध्यां सर्वमेव ते ॥ ००७ ॥

अर्जुन उवाच ॥

हन्त तेऽहं समाचक्षे दश नामानि यानि मे ।
अर्जुनः फल्गुनो जिष्णुः किरीटी श्वेतवाहनः ॥ ००८ ॥

बीभत्सुर्विजयः कृष्णः सव्यसाची धनञ्जयः ॥ ००८ ॥

उत्तर उवाच ॥

केनासि विजयो नाम केनासि श्वेतवाहनः ।
किरीटी नाम केनासि सव्यसाची कथं भवान् ॥ ००९ ॥

अर्जुनः फल्गुनो जिष्णुः कृष्णो बीभत्सुरेव च ।
धनञ्जयश्च केनासि प्रब्रूहि मम तत्त्वतः ॥ ०१० ॥

श्रुता मे तस्य वीरस्य केवला नामहेतवः ॥ ०१० ॥

अर्जुन उवाच ॥

सर्वाञ्जनपदाञ्जित्वा वित्तमाच्छिद्य केवलम् ।
मध्ये धनस्य तिष्ठामि तेनाहुर्मां धनञ्जयम् ॥ ०११ ॥

अभिप्रयामि सङ्ग्रामे यदहं युद्धदुर्मदान् ।
नाजित्वा विनिवर्तामि तेन मां विजयं विदुः ॥ ०१२ ॥

श्वेताः काञ्चनसंनाहा रथे युज्यन्ति मे हयाः ।
सङ्ग्रामे युध्यमानस्य तेनाहं श्वेतवाहनः ॥ ०१३ ॥

उत्तराभ्यां च पूर्वाभ्यां फल्गुनीभ्यामहं दिवा ।
जातो हिमवतः पृष्ठे तेन मां फल्गुनं विदुः ॥ ०१४ ॥

पुरा शक्रेण मे दत्तं युध्यतो दानवर्षभैः ।
किरीटं मूर्ध्नि सूर्याभं तेन माहुः किरीटिनम् ॥ ०१५ ॥

न कुर्यां कर्म बीभत्सं युध्यमानः कथञ्चन ।
तेन देवमनुष्येषु बीभत्सुरिति मां विदुः ॥ ०१६ ॥

उभौ मे दक्षिणौ पाणी गाण्डीवस्य विकर्षणे ।
तेन देवमनुष्येषु सव्यसाचीति मां विदुः ॥ ०१७ ॥

पृथिव्यां चतुरन्तायां वर्णो मे दुर्लभः समः ।
करोमि कर्म शुक्लं च तेन मामर्जुनं विदुः ॥ ०१८ ॥

अहं दुरापो दुर्धर्षो दमनः पाकशासनिः ।
तेन देवमनुष्येषु जिष्णुनामास्मि विश्रुतः ॥ ०१९ ॥

कृष्ण इत्येव दशमं नाम चक्रे पिता मम ।
कृष्णावदातस्य सतः प्रियत्वाद्बालकस्य वै ॥ ०२० ॥

वैशंपायन उवाच ॥

ततः पार्थं स वैराटिरभ्यवादयदन्तिकात् ।
अहं भूमिञ्जयो नाम नाम्नाहमपि चोत्तरः ॥ ०२१ ॥

दिष्ट्या त्वां पार्थ पश्यामि स्वागतं ते धनञ्जय ।
लोहिताक्ष महाबाहो नागराजकरोपम ॥ ०२२ ॥

यदज्ञानादवोचं त्वां क्षन्तुमर्हसि तन्मम ॥ ०२२ ॥

यतस्त्वया कृतं पूर्वं विचित्रं कर्म दुष्करम् ।
अतो भयं व्यतीतं मे प्रीतिश्च परमा त्वयि ॥ ०२३ ॥

---

# अध्याय ०४०

उत्तर उवाच ॥

आस्थाय विपुलं वीर रथं सारथिना मया ।

कतमं यास्यसेऽनीकमुक्तो यास्याम्यहं त्वया ॥ ००१ ॥

अर्जुन उवाच ॥

प्रीतोऽस्मि पुरुषव्याघ्र न भयं विद्यते तव ।
सर्वान्नुदामि ते शत्रून्रणे रणविशारद ॥ ००२ ॥

स्वस्थो भव महाबुद्धे पश्य मां शत्रुभिः सह ।
युध्यमानं विमर्देऽस्मिन्कुर्वाणं भैरवं महत् ॥ ००३ ॥

एतान्सर्वानुपासङ्गान्क्षिप्रं बध्नीहि मे रथे ।
एतं चाहर निस्त्रिंशं जातरूपपरिष्कृतम् ॥ ००४ ॥

अहं वै कुरुभिर्योत्स्याम्यवजेष्यामि ते पशून् ॥ ००४ ॥

सङ्कल्पपक्षविक्षेपं बाहुप्राकारतोरणम् ।
त्रिदण्डतूणसंबाधमनेकध्वजसङ्कुलम् ॥ ००५ ॥

ज्याक्षेपणं क्रोधकृतं नेमीनिनददुन्दुभि ।
नगरं ते मया गुप्तं रथोपस्थं भविष्यति ॥ ००६ ॥

अधिष्ठितो मया संख्ये रथो गाण्डीवधन्वना ।
अजेयः शत्रुसैन्यानां वैराटे व्येतु ते भयम् ॥ ००७ ॥

उत्तर उवाच ॥

बिभेमि नाहमेतेषां जानामि त्वां स्थिरं युधि ।
केशवेनापि सङ्ग्रामे साक्षादिन्द्रेण वा समम् ॥ ००८ ॥

इदं तु चिन्तयन्नेव परिमुह्यामि केवलम् ।
निश्चयं चापि दुर्मेधा न गच्छामि कथञ्चन ॥ ००९ ॥

एवं वीराङ्गरूपस्य लक्षणैरुचितस्य च ।
केन कर्मविपाकेन क्लीबत्वमिदमागतम् ॥ ०१० ॥

मन्ये त्वां क्लीबवेषेण चरन्तं शूलपाणिनम् ।
गन्धर्वराजप्रतिमं देवं वापि शतक्रतुम् ॥ ०११ ॥

अर्जुन उवाच ॥

भ्रातुर्नियोगाज्ज्येष्ठस्य संवत्सरमिदं व्रतम् ।
चरामि ब्रह्मचर्यं वै सत्यमेतद्ब्रवीमि ते ॥ ०१२ ॥

नास्मि क्लीबो महाबाहो परवान्धर्मसंयुतः ।
समाप्तव्रतमुत्तीर्णं विद्धि मां त्वं नृपात्मज ॥ ०१३ ॥

उत्तर उवाच ॥

परमोऽनुग्रहो मेऽद्य यत्प्रतर्को न मे वृथा ।
न हीदृशाः क्लीबरूपा भवन्तीह नरोत्तमाः ॥ ०१४ ॥

सहायवानस्मि रणे युध्येयममरैरपि ।
साध्वसं तत्प्रनष्टं मे किं करोमि ब्रवीहि मे ॥ ०१५ ॥

अहं ते सङ्ग्रहीष्यामि हयाञ्शत्रुरथारुजः ।
शिक्षितो ह्यस्मि सारथ्ये तीर्थतः पुरुषर्षभ ॥ ०१६ ॥

दारुको वासुदेवस्य यथा शक्रस्य मातलिः ।
तथा मां विद्धि सारथ्ये शिक्षितं नरपुङ्गव ॥ ०१७ ॥

यस्य याते न पश्यन्ति भूमौ प्राप्तं पदं पदम् ।
दक्षिणं यो धुरं युक्तः सुग्रीवसदृशो हयः ॥ ०१८ ॥

योऽयं धुरं धुर्यवरो वामं वहति शोभनः ।
तं मन्ये मेघपुष्पस्य जवेन सदृशं हयम् ॥ ०१९ ॥

योऽयं काञ्चनसंनाहः पार्ष्णिं वहति शोभनः ।
वामं सैन्यस्य मन्ये तं जवेन बलवत्तरम् ॥ ०२० ॥

योऽयं वहति ते पार्ष्णिं दक्षिणामञ्चितोद्यतः ।
बलाहकादपि मतः स जवे वीर्यवत्तरः ॥ ०२१ ॥

त्वामेवायं रथो वोढुं सङ्ग्रामेऽर्हति धन्विनम् ।
त्वं चेमं रथमास्थाय योद्धुमर्हो मतो मम ॥ ०२२ ॥

वैशंपायन उवाच ॥

ततो निर्मुच्य बाहुभ्यां वलयानि स वीर्यवान् ।
चित्रे दुन्दुभिसंनादे प्रत्यमुञ्चत्तले शुभे ॥ ०२३ ॥

कृष्णान्भङ्गीमतः केशाञ्श्वेतेनोद्ग्रथ्य वाससा ।
अधिज्यं तरसा कृत्वा गाण्डीवं व्याक्षिपद्धनुः ॥ ०२४ ॥

तस्य विक्षिप्यमाणस्य धनुषोऽभून्महास्वनः ।
यथा शैलस्य महतः शैलेनैवाभिजघ्नुषः ॥ ०२५ ॥

सनिर्घाताभवद्भूमिर्दिक्षु वायुर्ववौ भृशम् ।
भ्रान्तद्विजं खं तदासीत्प्रकम्पितमहाद्रुमम् ॥ ०२६ ॥

तं शब्दं कुरवोऽजानन्विस्फोटमशनेरिव ।
यदर्जुनो धनुःश्रेष्ठं बाहुभ्यामाक्षिपद्रथे ॥ ०२७ ॥

# अध्याय ०४१

वैशंपायन उवाच ॥

उत्तरं सारथिं कृत्वा शमीं कृत्वा प्रदक्षिणम् ।
आयुधं सर्वमादाय ततः प्रायाद्धनञ्जयः ॥ ००१ ॥

ध्वजं सिंहं रथात्तस्मादपनीय महारथः ।
प्रणिधाय शमीमूले प्रायादुत्तरसारथिः ॥ ००२ ॥

दैवीं मायां रथे युक्त्वा विहितां विश्वकर्मणा ।
काञ्चनं सिंहलाङ्गूलं ध्वजं वानरलक्षणम् ॥ ००३ ॥

मनसा चिन्तयामास प्रसादं पावकस्य च ।
स च तच्चिन्तितं ज्ञात्वा ध्वजे भूतान्यचोदयत् ॥ ००४ ॥

सपताकं विचित्राङ्गं सोपासङ्गं महारथः ।
रथमास्थाय बीभत्सुः कौन्तेयः श्वेतवाहनः ॥ ००५ ॥

बद्धासिः सतनुत्राणः प्रगृहीतशरासनः ।
ततः प्रायादुदीचीं स कपिप्रवरकेतनः ॥ ००६ ॥

स्वनवन्तं महाशङ्खं बलवानरिमर्दनः ।
प्राधमद्बलमास्थाय द्विषतां लोमहर्षणम् ॥ ००७ ॥

ततस्ते जवना धुर्या जानुभ्यामगमन्महीम् ।
उत्तरश्चापि संत्रस्तो रथोपस्थ उपाविशत् ॥ ००८ ॥

संस्थाप्य चाश्वान्कौन्तेयः समुद्यम्य च रश्मिभिः ।

उत्तरं च परिष्वज्य समाश्वासयदर्जुनः ॥ ००९ ॥

मा भैस्त्वं राजपुत्राग्र्य क्षत्रियोऽसि परंतप ।
कथं पुरुषशार्दूल शत्रुमध्ये विषीदसि ॥ ०१० ॥

श्रुतास्ते शङ्खशब्दाश्च भेरीशब्दाश्च पुष्कलाः ।
कुञ्जराणां च नदतां व्यूढानीकेषु तिष्ठताम् ॥ ०११ ॥

स त्वं कथमिहानेन शङ्खशब्देन भीषितः ।
विषण्णरूपो वित्रस्तः पुरुषः प्राकृतो यथा ॥ ०१२ ॥

उत्तर उवाच ॥

श्रुता मे शङ्खशब्दाश्च भेरीशब्दाश्च पुष्कलाः ।
कुञ्जराणां च निनदा व्यूढानीकेषु तिष्ठताम् ॥ ०१३ ॥

नैवंविधः शङ्खशब्दः पुरा जातु मया श्रुतः ।
ध्वजस्य चापि रूपं मे दृष्टपूर्वं न हीदृशम् ॥ ०१४ ॥

धनुषश्चैव निर्घोषः श्रुतपूर्वो न मे क्वचित् ॥ ०१४ ॥

अस्य शङ्खस्य शब्देन धनुषो निस्वनेन च ।
रथस्य च निनादेन मनो मुह्यति मे भृशम् ॥ ०१५ ॥

व्याकुलाश्च दिशः सर्वा हृदयं व्यथतीव मे ।
ध्वजेन पिहिताः सर्वा दिशो न प्रतिभान्ति मे ॥ ०१६ ॥

गाण्डीवस्य च शब्देन कर्णौ मे बधिरीकृतौ ॥ ०१६ ॥

अर्जुन उवाच ॥

एकान्ते रथमास्थाय पद्भ्यां त्वमवपीडय ।
दृढं च रश्मीन्संयच्छ शङ्खं ध्मास्याम्यहं पुनः ॥ ०१७ ॥

वैशंपायन उवाच ॥

तस्य शङ्खस्य शब्देन रथनेमिस्वनेन च ।
गाण्डीवस्य च घोषेण पृथिवी समकम्पत ॥ ०१८ ॥

द्रोण उवाच ॥

यथा रथस्य निर्घोषो यथा शङ्ख उदीर्यते ।
कम्पते च यथा भूमिर्नैषोऽन्यः सव्यसाचिनः ॥ ०१९ ॥

शस्त्राणि न प्रकाशन्ते न प्रहृष्यन्ति वाजिनः ।
अग्नयश्च न भासन्ते समिद्धास्तन्न शोभनम् ॥ ०२० ॥

प्रत्यादित्यं च नः सर्वे मृगा घोरप्रवादिनः ।
ध्वजेषु च निलीयन्ते वायसास्तन्न शोभनम् ॥ ०२१ ॥

शकुनाश्चापसव्या नो वेदयन्ति महद्भयम् ॥ ०२१ ॥

गोमायुरेष सेनाया रुवन्मध्येऽनुधावति ।
अनाहतश्च निष्क्रान्तो महद्वेदयते भयम् ॥ ०२२ ॥

भवतां रोमकूपाणि प्रहृष्टान्युपलक्षये ॥ ०२२ ॥

पराभूता च वः सेना न कश्चिद्योद्धुमिच्छति ।
विवर्णमुखभूयिष्ठाः सर्वे योधा विचेतसः ॥ ०२३ ॥

गाः संप्रस्थाप्य तिष्ठामो व्यूढानीकाः प्रहारिणः ॥ ०२३ ॥

# अध्याय ०४२

वैशंपायन उवाच ॥

अथ दुर्योधनो राजा समरे भीष्ममब्रवीत् ।
द्रोणं च रथशार्दूलं कृपं च सुमहारथम् ॥ ००१ ॥

उक्तोऽयमर्थ आचार्यो मया कर्णेन चासकृत् ।
पुनरेव च वक्ष्यामि न हि तृप्यामि तं ब्रुवन् ॥ ००२ ॥

पराजितैर्हि वस्तव्यं तैश्च द्वादश वत्सरान् ।
वने जनपदेऽज्ञातैरेष एव पणो हि नः ॥ ००३ ॥

तेषां न तावन्निर्वृत्तं वर्तते तु त्रयोदशम् ।
अज्ञातवासं बीभत्सुरथास्माभिः समागतः ॥ ००४ ॥

अनिवृत्ते तु निर्वासे यदि बीभत्सुरागतः ।
पुनर्द्वादश वर्षाणि वने वत्स्यन्ति पाण्डवाः ॥ ००५ ॥

लोभाद्वा ते न जानीयुरस्मान्वा मोह आविशत् ।
हीनातिरिक्तमेतेषां भीष्मो वेदितुमर्हति ॥ ००६ ॥

अर्थानां तु पुनर्द्वैधे नित्यं भवति संशयः ।
अन्यथा चिन्तितो ह्यर्थः पुनर्भवति चान्यथा ॥ ००७ ॥

उत्तरं मार्गमाणानां मत्स्यसेनां युयुत्सताम् ।
यदि बीभत्सुरायातस्तेषां कः स्यात्पराङ्मुखः ॥ ००८ ॥

त्रिगर्तानां वयं हेतोर्मत्स्यान्योद्धुमिहागताः ।
मत्स्यानां विप्रकारांस्ते बहूनस्मानकीर्तयन् ॥ ००९ ॥

तेषां भयाभिपन्नानां तदस्माभिः प्रतिश्रुतम् ।
प्रथमं तैर्ग्रहीतव्यं मत्स्यानां गोधनं महत् ॥ ०१० ॥

सप्तमीमपराह्णे वै तथा नस्तैः समाहितम् ।
अष्टम्यां पुनरस्माभिरादित्यस्योदयं प्रति ॥ ०११ ॥

ते वा गावो न पश्यन्ति यदि व स्युः पराजिताः ।
अस्मान्वाप्यतिसंधाय कुर्युर्मत्स्येन सङ्गतम् ॥ ०१२ ॥

अथ वा तानुपायातो मत्स्यो जानपदैः सह ।
सर्वया सेनया सार्धमस्मान्योद्धुमुपागतः ॥ ०१३ ॥

तेषामेव महावीर्यः कश्चिदेव पुरःसरः ।
अस्माञ्जेतुमिहायातो मत्स्यो वापि स्वयं भवेत् ॥ ०१४ ॥

यद्येष राजा मत्स्यानां यदि बीभत्सुरागतः ।
सर्वैर्योद्धव्यमस्माभिरिति नः समयः कृतः ॥ ०१५ ॥

अथ कस्मात्स्थिता ह्येते रथेषु रथसत्तमाः ।
भीष्मो द्रोणः कृपश्चैव विकर्णो द्रौणिरेव च ॥ ०१६ ॥

संभ्रान्तमनसः सर्वे काले ह्यस्मिन्महारथाः ।
नान्यत्र युद्धाच्छ्रेयोऽस्ति तथात्मा प्रणिधीयताम् ॥ ०१७ ॥

आच्छिन्ने गोधनेऽस्माकमपि देवेन वज्रिणा ।
यमेन वापि सङ्ग्रामे को हास्तिनपुरं व्रजेत् ॥ ०१८ ॥

शरैरभिप्रणुन्नानां भग्नानां गहने वने ।

को हि जीवेत्पदातीनां भवेदश्वेषु संशयः ॥ ०१९ ॥

आचार्यं पृष्ठतः कृत्वा तथा नीतिर्विधीयताम् ॥ ०१९ ॥

जानाति हि मतं तेषामतस्त्रासयतीव नः ।
अर्जुनेनास्य संप्रीतिमधिकामुपलक्षये ॥ ०२० ॥

तथा हि दृष्ट्वा बीभत्सुमुपायान्तं प्रशंसति ।
यथा सेना न भज्येत तथा नीतिर्विधीयताम् ॥ ०२१ ॥

अदेशिका महारण्ये ग्रीष्मे शत्रुवशं गता ।
यथा न विभ्रमेत्सेना तथा नीतिर्विधीयताम् ॥ ०२२ ॥

अश्वानां हेषितं श्रुत्वा का प्रशंसा भवेत्परे ।
स्थाने वापि व्रजन्तो वा सदा हेषन्ति वाजिनः ॥ ०२३ ॥

सदा च वायवो वान्ति नित्यं वर्षति वासवः ।
स्तनयित्नोश्च निर्घोषः श्रूयते बहुशस्तथा ॥ ०२४ ॥

किमत्र कार्यं पार्थस्य कथं वा स प्रशस्यते ।
अन्यत्र कामाद्द्वेषाद्वा रोषाद्वास्मासु केवलात् ॥ ०२५ ॥

आचार्या वै कारुणिकाः प्राज्ञाश्चापायदर्शिनः ।
नैते महाभये प्राप्ते संप्रष्टव्याः कथञ्चन ॥ ०२६ ॥

प्रासादेषु विचित्रेषु गोष्ठीष्वावसथेषु च ।
कथा विचित्राः कुर्वाणाः पण्डितास्तत्र शोभनाः ॥ ०२७ ॥

बहून्याश्चर्यरूपाणि कुर्वन्तो जनसंसदि ।
इष्वस्त्रे चारुसंधाने पण्डितास्तत्र शोभनाः ॥ ०२८ ॥

परेषां विवरज्ञाने मनुष्याचरितेषु च ।
अन्नसंस्कारदोषेषु पण्डितास्तत्र शोभनाः ॥ ०२९ ॥

पण्डितान्पृष्ठतः कृत्वा परेषां गुणवादिनः ।
विधीयतां तथा नीतिर्यथा वध्येत वै परः ॥ ०३० ॥

गावश्चैव प्रतिष्ठन्तां सेनां व्यूहन्तु माचिरम् ।
आरक्षाश्च विधीयन्तां यत्र योत्स्यामहे परान् ॥ ०३१ ॥

---

# अध्याय ०४३

कर्ण उवाच ॥

सर्वानायुष्मतो भीतान्संत्रस्तानिव लक्षये ।
अयुद्धमनसश्चैव सर्वांश्चैवानवस्थितान् ॥ ००१ ॥

यद्येष राजा मत्स्यानां यदि बीभत्सुरागतः ।
अहमावारयिष्यामि वेलेव मकरालयम् ॥ ००२ ॥

मम चापप्रमुक्तानां शराणां नतपर्वणाम् ।
नावृत्तिर्गच्छतामस्ति सर्पाणामिव सर्पताम् ॥ ००३ ॥

रुक्मपुङ्खाः सुतीक्ष्णाग्रा मुक्ता हस्तवता मया ।
छादयन्तु शराः पार्थं शलभा इव पादपम् ॥ ००४ ॥

शराणां पुङ्खसक्तानां मौर्व्याभिहतया दृढम् ।
श्रूयतां तलयोः शब्दो भेर्योराहतयोरिव ॥ ००५ ॥

समाहितो हि बीभत्सुर्वर्षाण्यष्टौ च पञ्च च ।
जातस्नेहश्च युद्धस्य मयि संप्रहरिष्यति ॥ ००६ ॥

पात्रीभूतश्च कौन्तेयो ब्राह्मणो गुणवानिव ।
शरौघान्प्रतिगृह्णातु मया मुक्तान्सहस्रशः ॥ ००७ ॥

एष चैव महेष्वासस्त्रिषु लोकेषु विश्रुतः ।
अहं चापि कुरुश्रेष्ठा अर्जुनान्नावरः क्वचित् ॥ ००८ ॥

इतश्चेतश्च निर्मुक्तैः काञ्चनैर्गार्ध्रवाजितैः ।
दृश्यतामद्य वै व्योम खद्योतैरिव संवृतम् ॥ ००९ ॥

अद्याहमृणमक्षय्यं पुरा वाचा प्रतिश्रुतम् ।
धार्तराष्ट्रस्य दास्यामि निहत्य समरेऽर्जुनम् ॥ ०१० ॥

अन्तरा छिद्यमानानां पुङ्खानां व्यतिशीर्यताम् ।
शलभानामिवाकाशे प्रचारः संप्रदृश्यताम् ॥ ०११ ॥

इन्द्राशनिसमस्पर्शं महेन्द्रसमतेजसम् ।
अर्दयिष्याम्यहं पार्थमुल्काभिरिव कुञ्जरम् ॥ ०१२ ॥

तमग्निमिव दुर्धर्षमसिशक्तिशरेन्धनम् ।
पाण्डवाग्निमहं दीप्तं प्रदहन्तमिवाहितान् ॥ ०१३ ॥

अश्ववेगपुरोवातो रथौघस्तनयित्नुमान् ।
शरधारो महामेघः शमयिष्यामि पाण्डवम् ॥ ०१४ ॥

मत्कार्मुकविनिर्मुक्ताः पार्थमाशीविषोपमाः ।
शराः समभिसर्पन्तु वल्मीकमिव पन्नगाः ॥ ०१५ ॥

जामदग्न्यान्मया ह्यस्त्रं यत्प्राप्तमृषिसत्तमात् ।
तदुपाश्रित्य वीर्यं च युध्येयमपि वासवम् ॥ ०१६ ॥

ध्वजाग्रे वानरस्तिष्ठन्भल्लेन निहतो मया ।
अद्यैव पततां भूमौ विनदन्भैरवान्रवान् ॥ ०१७ ॥

शत्रोर्मयाभिपन्नानां भूतानां ध्वजवासिनाम् ।
दिशः प्रतिष्ठमानानामस्तु शब्दो दिवं गतः ॥ ०१८ ॥

अद्य दुर्योधनस्याहं शल्यं हृदि चिरस्थितम् ।
समूलमुद्धरिष्यामि बीभत्सुं पातयन्रथात् ॥ ०१९ ॥

हताश्वं विरथं पार्थं पौरुषे पर्यवस्थितम् ।
निःश्वसन्तं यथा नागमद्य पश्यन्तु कौरवाः ॥ ०२० ॥

कामं गच्छन्तु कुरवो धनमादाय केवलम् ।
रथेषु वापि तिष्ठन्तो युद्धं पश्यन्तु मामकम् ॥ ०२१ ॥

---

# अध्याय ०४४

कृप उवाच ॥

सदैव तव राधेय युद्धे क्रूरतरा मतिः ।
नार्थानां प्रकृतिं वेत्थ नानुबन्धमवेक्षसे ॥ ००१ ॥

नया हि बहवः सन्ति शास्त्राण्याश्रित्य चिन्तिताः ।
तेषां युद्धं तु पापिष्ठं वेदयन्ति पुराविदः ॥ ००२ ॥

देशकालेन संयुक्तं युद्धं विजयदं भवेत् ।
हीनकालं तदेवेह फलवन्न भवत्युत ॥ ००३ ॥

देशे काले च विक्रान्तं कल्याणाय विधीयते ॥ ००३ ॥

आनुकूल्येन कार्याणामन्तरं संविधीयताम् ।
भारं हि रथकारस्य न व्यवस्यन्ति पण्डिताः ॥ ००४ ॥

परिचिन्त्य तु पार्थेन संनिपातो न नः क्षमः ।
एकः कुरूनभ्यरक्षदेकश्चाग्निमतर्पयत् ॥ ००५ ॥

एकश्च पञ्च वर्षाणि ब्रह्मचर्यमधारयत् ।
एकः सुभद्रामारोप्य द्वैरथे कृष्णमाह्वयत् ॥ ००६ ॥

अस्मिन्नेव वने कृष्णो हृतां कृष्णामवाजयत् ॥ ००६ ॥

एकश्च पञ्च वर्षाणि शक्रादस्त्राण्यशिक्षत ।
एकः सांयमिनीं जित्वा कुरूणामकरोद्यशः ॥ ००७ ॥

एको गन्धर्वराजानं चित्रसेनमरिंदमः ।
विजिग्ये तरसा संख्ये सेनां चास्य सुदुर्जयाम् ॥ ००८ ॥

तथा निवातकवचाः कालखञ्जाश्च दानवाः ।
दैवतैरप्यवध्यास्ते एकेन युधि पातिताः ॥ ००९ ॥

एकेन हि त्वया कर्ण किं नामेह कृतं पुरा ।
एकैकेन यथा तेषां भूमिपाला वशीकृताः ॥ ०१० ॥

इन्द्रोऽपि हि न पार्थेन संयुगे योद्धुमर्हति ।
यस्तेनाशंसते योद्धुं कर्तव्यं तस्य भेषजम् ॥ ०११ ॥

आशीविषस्य क्रुद्धस्य पाणिमुद्यम्य दक्षिणम् ।
अविमृश्य प्रदेशिन्या दंष्ट्रामादातुमिच्छसि ॥ ०१२ ॥

अथ वा कुञ्जरं मत्तमेक एव चरन्वने ।
अनङ्कुशं समारुह्य नगरं गन्तुमिच्छसि ॥ ०१३ ॥

समिद्धं पावकं वापि घृतमेदोवसाहुतम् ।
घृताक्तश्चीरवासास्त्वं मध्येनोत्तर्तुमिच्छसि ॥ ०१४ ॥

आत्मानं यः समुद्बध्य कण्ठे बद्ध्वा महाशिलाम् ।
समुद्रं प्रतरेद्दोर्भ्यां तत्र किं नाम पौरुषम् ॥ ०१५ ॥

अकृतास्त्रः कृतास्त्रं वै बलवन्तं सुदुर्बलः ।
तादृशं कर्ण यः पार्थं योद्धुमिच्छेत्स दुर्मतिः ॥ ०१६ ॥

अस्माभिरेष निकृतो वर्षाणीह त्रयोदश ।
सिंहः पाशविनिर्मुक्तो न नः शेषं करिष्यति ॥ ०१७ ॥

एकान्ते पार्थमासीनं कूपेऽग्निमिव संवृतम् ।
अज्ञानादभ्यवस्कन्द्य प्राप्ताः स्मो भयमुत्तमम् ॥ ०१८ ॥

सह युध्यामहे पार्थमागतं युद्धदुर्मदम् ।
सैन्यास्तिष्ठन्तु संनद्धा व्यूढानीकाः प्रहारिणः ॥ ०१९ ॥

द्रोणो दुर्योधनो भीष्मो भवान्द्रौणिस्तथा वयम् ।
सर्वे युध्यामहे पार्थं कर्ण मा साहसं कृथाः ॥ ०२० ॥

वयं व्यवसितं पार्थं वज्रपाणिमिवोद्यतम् ।
षड्रथाः प्रतियुध्येम तिष्ठेम यदि संहताः ॥ ०२१ ॥

व्यूढानीकानि सैन्यानि यत्ताः परमधन्विनः ।

युध्यामहेऽर्जुनं संख्ये दानवा वासवं यथा ॥ ०२२ ॥

---

# अध्याय ०४५

अश्वत्थामोवाच ॥

न च तावज्जिता गावो न च सीमान्तरं गताः ।
न हास्तिनपुरं प्राप्तास्त्वं च कर्ण विकत्थसे ॥ ००१ ॥

सङ्ग्रामान्सुबहूञ्जित्वा लब्ध्वा च विपुलं धनम् ।
विजित्य च परां भूमिं नाहुः किञ्चन पौरुषम् ॥ ००२ ॥

पचत्यग्निरवाक्यस्तु तूष्णीं भाति दिवाकरः ।
तूष्णीं धारयते लोकान्वसुधा सचराचरान् ॥ ००३ ॥

चातुर्वर्ण्यस्य कर्माणि विहितानि मनीषिभिः ।
धनं यैरधिगन्तव्यं यच्च कुर्वन्न दुष्यति ॥ ००४ ॥

अधीत्य ब्राह्मणो वेदान्याजयेत यजेत च ।
क्षत्रियो धनुराश्रित्य यजेतैव न याजयेत् ॥ ००५ ॥

वैश्योऽधिगम्य द्रव्याणि ब्रह्मकर्माणि कारयेत् ॥ ००५ ॥

वर्तमाना यथाशास्त्रं प्राप्य चापि महीमिमाम् ।
सत्कुर्वन्ति महाभागा गुरून्सुविगुणानपि ॥ ००६ ॥

प्राप्य द्यूतेन को राज्यं क्षत्रियस्तोष्टुमर्हति ।
तथा नृशंसरूपेण यथान्यः प्राकृतो जनः ॥ ००७ ॥

तथावाप्तेषु वित्तेषु को विकत्थेद्विचक्षणः ।
निकृत्या वञ्चनायोगैश्चरन्वैतंसिको यथा ॥ ००८ ॥

कतमद्वैरथं युद्धं यत्राजैषीर्धनञ्जयम् ।
नकुलं सहदेवं च धनं येषां त्वया हृतम् ॥ ००९ ॥

युधिष्ठिरो जितः कस्मिन्भीमश्च बलिनां वरः ।
इन्द्रप्रस्थं त्वया कस्मिन्सङ्ग्रामे निर्जितं पुरा ॥ ०१० ॥

तथैव कतमं युद्धं यस्मिन्कृष्णा जिता त्वया ।
एकवस्त्रा सभां नीता दुष्टकर्मन्रजस्वला ॥ ०११ ॥

मूलमेषां महत्कृत्तं सारार्थी चन्दनं यथा ।
कर्म कारयिथाः शूर तत्र किं विदुरोऽब्रवीत् ॥ ०१२ ॥

यथाशक्ति मनुष्याणां शममालक्षयामहे ।
अन्येषां चैव सत्त्वानामपि कीटपिपीलिके ॥ ०१३ ॥

द्रौपद्यास्तं परिक्लेशं न क्षन्तुं पाण्डवोऽर्हति ।
दुःखाय धार्तराष्ट्राणां प्रादुर्भूतो धनञ्जयः ॥ ०१४ ॥

त्वं पुनः पण्डितो भूत्वा वाचं वक्तुमिहेच्छसि ।
वैरान्तकरणो जिष्णुर्न नः शेषं करिष्यति ॥ ०१५ ॥

नैष देवान्न गन्धर्वान्नासुरान्न च राक्षसान् ।
भयादिह न युध्येत कुन्तीपुत्रो धनञ्जयः ॥ ०१६ ॥

यं यमेषोऽभिसङ्क्रुद्धः सङ्ग्रामेऽभिपतिष्यति ।
वृक्षं गरुडवेगेन विनिहत्य तमेष्यति ॥ ०१७ ॥

त्वत्तो विशिष्टं वीर्येण धनुष्यमरराद्ममम् ।
वासुदेवसमं युद्धे तं पार्थं को न पूजयेत्  ॥ ०१८  ॥

दैवं दैवेन युध्येत मानुषेण च मानुषम् ।
अस्त्रेणास्त्रं समाहन्यात्कोऽर्जुनेन समः पुमान्  ॥ ०१९  ॥

पुत्रादनन्तरः शिष्य इति धर्मविदो विदुः ।
एतेनापि निमित्तेन प्रियो द्रोणस्य पाण्डवः  ॥ ०२०  ॥

यथा त्वमकरोर्द्यूतमिन्द्रप्रस्थं यथाहरः ।
यथानैषीः सभां कृष्णां तथा युध्यस्व पाण्डवम्  ॥ ०२१  ॥

अयं ते मातुलः प्राज्ञः क्षत्रधर्मस्य कोविदः ।
दुर्द्यूतदेवी गान्धारः शकुनिर्युध्यतामिह  ॥ ०२२  ॥

नाक्षान्क्षिपति गाण्डीवं न कृतं द्वापरं न च ।
ज्वलतो निशितान्बाणांस्तीक्ष्णान्क्षिपति गाण्डिवम्  ॥ ०२३  ॥

न हि गाण्डीवनिर्मुक्ता गार्ध्रपत्राः सुतेजनाः ।
अन्तरेष्ववतिष्ठन्ति गिरीणामपि दारणाः  ॥ ०२४  ॥

अन्तकः शमनो मृत्युस्तथाग्निर्वडवामुखः ।
कुर्युरेते क्वचिच्छेषं न तु क्रुद्धो धनञ्जयः  ॥ ०२५  ॥

युध्यतां काममाचार्यो नाहं योत्स्ये धनञ्जयम् ।
मत्स्यो ह्यस्माभिरायोध्यो यद्यागच्छेद्गवां पदम्  ॥ ०२६  ॥

# अध्याय ०४६

भीष्म उवाच ॥

साधु पश्यति वै द्रोणः कृपः साध्वनुपश्यति ।
कर्णस्तु क्षत्रधर्मेण यथावद्योद्धुमिच्छति ॥ ००१ ॥

आचार्यो नाभिषक्तव्यः पुरुषेण विजानता ।
देशकालौ तु संप्रेक्ष्य योद्धव्यमिति मे मतिः ॥ ००२ ॥

यस्य सूर्यसमाः पञ्च सपत्नाः स्युः प्रहारिणः ।
कथमभ्युदये तेषां न प्रमुह्येत पण्डितः ॥ ००३ ॥

स्वार्थे सर्वे विमुह्यन्ति येऽपि धर्मविदो जनाः ।
तस्माद्राजन्ब्रवीम्येष वाक्यं ते यदि रोचते ॥ ००४ ॥

कर्णो यदभ्यवोचन्नस्तेजःसञ्जननाय तत् ।
आचार्यपुत्रः क्षमतां महत्कार्यमुपस्थितम् ॥ ००५ ॥

नायं कालो विरोधस्य कौन्तेये समुपस्थिते ।
क्षन्तव्यं भवता सर्वमाचार्येण कृपेण च ॥ ००६ ॥

भवतां हि कृतास्त्रत्वं यथादित्ये प्रभा तथा ।
यथा चन्द्रमसो लक्ष्म सर्वथा नापकृष्यते ॥ ००७ ॥

एवं भवत्सु ब्राह्मण्यं ब्रह्मास्त्रं च प्रतिष्ठितम् ॥ ००७ ॥

चत्वार एकतो वेदाः क्षात्रमेकत्र दृश्यते ।
नैतत्समस्तमुभयं कस्मिंश्चिदनुशुश्रुमः ॥ ००८ ॥

अन्यत्र भारताचार्यात्सपुत्रादिति मे मतिः ।

ब्रह्मास्त्रं चैव वेदाश्च नैतदन्यत्र दृश्यते ॥ ००९ ॥

आचार्यपुत्रः क्षमतां नायं कालः स्वभेदने ।
सर्वे संहत्य युध्यामः पाकशासनिमागतम् ॥ ०१० ॥

बलस्य व्यसनानीह यान्युक्तानि मनीषिभिः ।
मुख्यो भेदो हि तेषां वै पापिष्ठो विदुषां मतः ॥ ०११ ॥

अश्वत्थामोवाच ॥

आचार्य एव क्षमतां शान्तिरत्र विधीयताम् ।
अभिषज्यमाने हि गुरौ तद्वृत्तं रोषकारितम् ॥ ०१२ ॥

वैशंपायन उवाच ॥

ततो दुर्योधनो द्रोणं क्षमयामास भारत ।
सह कर्णेन भीष्मेण कृपेण च महात्मना ॥ ०१३ ॥

द्रोण उवाच ॥

यदेव प्रथमं वाक्यं भीष्मः शांतनवोऽब्रवीत् ।
तेनैवाहं प्रसन्नो वै परमत्र विधीयताम् ॥ ०१४ ॥

यथा दुर्योधनेऽयत्ते नागः स्पृशति सैनिकान् ।
साहसाद्यदि वा मोहात्तथा नीतिर्विधीयताम् ॥ ०१५ ॥

वनवासे ह्यनिर्वृत्ते दर्शयेन्न धनञ्जयः ।
धनं वालभमानोऽत्र नाद्य नः क्षन्तुमर्हति ॥ ०१६ ॥

यथा नायं समायुज्याद्धार्तराष्ट्रान्कथञ्चन ।
यथा च न पराजय्यात्तथा नीतिर्विधीयताम् ॥ ०१७ ॥

उक्तं दुर्योधनेनापि पुरस्ताद्वाक्यमीदृशम् ।
तदनुस्मृत्य गाङ्गेय यथावद्वक्तुमर्हसि ॥ ०१८ ॥

---

# अध्याय ०४७

भीष्म उवाच ॥

कलांशास्तात युज्यन्ते मुहूर्ताश्च दिनानि च ।
अर्धमासाश्च मासाश्च नक्षत्राणि ग्रहास्तथा ॥ ००१ ॥

ऋतवश्चापि युज्यन्ते तथा संवत्सरा अपि ।
एवं कालविभागेन कालचक्रं प्रवर्तते ॥ ००२ ॥

तेषां कालातिरेकेण ज्योतिषां च व्यतिक्रमात् ।
पञ्चमे पञ्चमे वर्षे द्वौ मासावुपजायतः ॥ ००३ ॥

तेषामभ्यधिका मासाः पञ्च द्वादश च क्षपाः ।
त्रयोदशानां वर्षाणामिति मे वर्तते मतिः ॥ ००४ ॥

सर्वं यथावच्चरितं यद्यदेभिः परिश्रुतम् ।
एवमेतद्ध्रुवं ज्ञात्वा ततो बीभत्सुरागतः ॥ ००५ ॥

सर्वे चैव महात्मानः सर्वे धर्मार्थकोविदाः ।
येषां युधिष्ठिरो राजा कस्माद्धर्मेऽपराध्नुयुः ॥ ००६ ॥

अलुब्धाश्चैव कौन्तेयाः कृतवन्तश्च दुष्करम् ।
न चापि केवलं राज्यमिच्छेयुस्तेऽनुपायतः ॥ ००७ ॥

तदैव ते हि विक्रान्तुमीषुः कौरवनन्दनाः ।
धर्मपाशनिबद्धास्तु न चेलुः क्षत्रियव्रतात् ॥ ००८ ॥

यच्चानृत इति ख्यायेद्यच्च गच्छेत्पराभवम् ।
वृणुयुर्मरणं पार्था नानृतत्वं कथञ्चन ॥ ००९ ॥

प्राप्ते तु काले प्राप्तव्यं नोत्सृजेयुर्नरर्षभाः ।
अपि वज्रभृता गुप्तं तथावीर्या हि पाण्डवाः ॥ ०१० ॥

प्रतियुध्याम समरे सर्वशस्त्रभृतां वरम् ।
तस्माद्यदत्र कल्याणं लोके सद्भिरनुष्ठितम् ॥ ०११ ॥

तत्संविधीयतां क्षिप्रं मा नो ह्यर्थोऽतिगात्परान् ॥ ०११ ॥

न हि पश्यामि सङ्ग्रामे कदाचिदपि कौरव ।
एकान्तसिद्धिं राजेन्द्र संप्राप्तश्च धनञ्जयः ॥ ०१२ ॥

संप्रवृत्ते तु सङ्ग्रामे भावाभावौ जयाजयौ ।
अवश्यमेकं स्पृशतो दृष्टमेतदसंशयम् ॥ ०१३ ॥

तस्माद्युद्धावचरिकं कर्म वा धर्मसंहितम् ।
क्रियतामाशु राजेन्द्र संप्राप्तो हि धनञ्जयः ॥ ०१४ ॥

दुर्योधन उवाच ॥

नाहं राज्यं प्रदास्यामि पाण्डवानां पितामह ।
युद्धावचारिकं यत्तु तच्छीघ्रं संविधीयताम् ॥ ०१५ ॥

भीष्म उवाच ॥

अत्र या मामकी बुद्धिः श्रूयतां यदि रोचते ।
क्षिप्रं बलचतुर्भागं गृह्य गच्छ पुरं प्रति ॥ ०१६ ॥

ततोऽपरश्चतुर्भागो गाः समादाय गच्छतु ॥ ०१६ ॥

वयं त्वर्धेन सैन्येन प्रतियोत्स्याम पाण्डवम् ।
मत्स्यं वा पुनरायातमथ वापि शतक्रतुम् ॥ ०१७ ॥

आचार्यो मध्यतस्तिष्ठत्वश्वत्थामा तु सव्यतः ।
कृपः शारद्वतो धीमान्पार्श्वं रक्षतु दक्षिणम् ॥ ०१८ ॥

अग्रतः सूतपुत्रस्तु कर्णस्तिष्ठतु दंशितः ।
अहं सर्वस्य सैन्यस्य पश्चात्स्थास्यामि पालयन् ॥ ०१९ ॥

---

# अध्याय ०४८

वैशंपायन उवाच ॥

तथा व्यूढेष्वनीकेषु कौरवेयैर्महारथैः ।
उपायादर्जुनस्तूर्णं रथघोषेण नादयन् ॥ ००१ ॥

ददृशुस्ते ध्वजाग्रं वै शुश्रुवुश्च रथस्वनम् ।
दोधूयमानस्य भृशं गाण्डीवस्य च निस्वनम् ॥ ००२ ॥

ततस्तत्सर्वमालोक्य द्रोणो वचनमब्रवीत् ।
महारथमनुप्राप्तं दृष्ट्वा गाण्डीवधन्विनम् ॥ ००३ ॥

एतद्ध्वजाग्रं पार्थस्य दूरतः संप्रकाशते ।
एष घोषः सजलदो रोरवीति च वानरः ॥ ००४ ॥

एष तिष्ठन्रथश्रेष्ठो रथे रथवरप्रणुत् ।
उत्कर्षति धनुःश्रेष्ठं गाण्डीवमशनिस्वनम् ॥ ००५ ॥

इमौ हि बाणौ सहितौ पादयोर्मे व्यवस्थितौ ।
अपरौ चाप्यतिक्रान्तौ कर्णौ संस्पृश्य मे शरौ ॥ ००६ ॥

निरुष्य हि वने वासं कृत्वा कर्मातिमानुषम् ।
अभिवादयते पार्थः श्रोत्रे च परिपृच्छति ॥ ००७ ॥

अर्जुन उवाच ॥

इषुपाते च सेनाया हयान्संयच्छ सारथे ।
यावत्समीक्षे सैन्येऽस्मिन्कासौ कुरुकुलाधमः ॥ ००८ ॥

सर्वानन्याननादृत्य दृष्ट्वा तमतिमानिनम् ।
तस्य मूर्ध्नि पतिष्यामि तत एते पराजिताः ॥ ००९ ॥

एष व्यवस्थितो द्रोणो द्रौणिश्च तदनन्तरम् ।
भीष्मः कृपश्च कर्णश्च महेष्वासा व्यवस्थिताः ॥ ०१० ॥

राजानं नात्र पश्यामि गाः समादाय गच्छति ।
दक्षिणं मार्गमास्थाय शङ्के जीवपरायणः ॥ ०११ ॥

उत्सृज्यैतद्रथानीकं गच्छ यत्र सुयोधनः ।
तत्रैव योत्स्ये वैराटे नास्ति युद्धं निरामिषम् ॥ ०१२ ॥

तं जित्वा विनिवर्तिष्ये गाः समादाय वै पुनः ॥ ०१२ ॥

वैशंपायन उवाच ॥

एवमुक्तः स वैराटिर्हयान्संयम्य यत्नतः ।
नियम्य च ततो रश्मीन्यत्र ते कुरुपुङ्गवाः ॥ ०१३ ॥

अचोदयत्ततो वाहान्यतो दुर्योधनस्ततः ॥ ०१३ ॥

उत्सृज्य रथवंशं तु प्रयाते श्वेतवाहने ।
अभिप्रायं विदित्वास्य द्रोणो वचनमब्रवीत् ॥ ०१४ ॥

नैषोऽन्तरेण राजानं बीभत्सुः स्थातुमिच्छति ।
तस्य पार्ष्णिं ग्रहीष्यामो जवेनाभिप्रयास्यतः ॥ ०१५ ॥

न ह्येनमभिसङ्क्रुद्धमेको युध्येत संयुगे ।
अन्यो देवात्सहस्राक्षात्कृष्णाद्वा देवकीसुतात् ॥ ०१६ ॥

किं नो गावः करिष्यन्ति धनं वा विपुलं तथा ।
दुर्योधनः पार्थजले पुरा नौरिव मज्जति ॥ ०१७ ॥

तथैव गत्वा बीभत्सुर्नाम विश्राव्य चात्मनः ।
शलभैरिव तां सेनां शरैः शीघ्रमवाकिरत् ॥ ०१८ ॥

कीर्यमाणाः शरौघैस्तु योधास्ते पार्थचोदितैः ।
नापश्यन्नावृतां भूमिमन्तरिक्षं च पत्रिभिः ॥ ०१९ ॥

तेषां नात्मनिनो युद्धे नापयानेऽभवन्मतिः ।
शीघ्रत्वमेव पार्थस्य पूजयन्ति स्म चेतसा ॥ ०२० ॥

ततः शङ्खं प्रदध्मौ स द्विषतां लोमहर्षणम् ।
विस्फार्य च धनुःश्रेष्ठं ध्वजे भूतान्यचोदयत् ॥ ०२१ ॥

तस्य शङ्खस्य शब्देन रथनेमिस्वनेन च ।
अमानुषाणां तेषां च भूतानां ध्वजवासिनाम्  ॥ ०२२  ॥

ऊर्ध्वं पुच्छान्विधुन्वाना रेभमाणाः समन्ततः ।
गावः प्रतिन्यवर्तन्त दिशमास्थाय दक्षिणाम्  ॥ ०२३  ॥

---

# अध्याय ०४९

वैशंपायन उवाच  ॥

स शत्रुसेनां तरसा प्रणुद्य ; गास्ता विजित्याथ धनुर्धराग्र्यः ।
दुर्योधनायाभिमुखं प्रयातो ; भूयोऽर्जुनः प्रियमाजौ चिकीर्षन्  ॥ ००१  ॥

गोषु प्रयातासु जवेन मत्स्या ;न्किरीटिनं कृतकार्यं च मत्वा ।
दुर्योधनायाभिमुखं प्रयान्तं ; कुरुप्रवीराः सहसाभिपेतुः  ॥ ००२  ॥

तेषामनीकानि बहूनि गाढं ; व्यूढानि दृष्ट्वा बहुलध्वजानि ।
मत्स्यस्य पुत्रं द्विषतां निहन्ता ; वैराटिमामन्त्र्य ततोऽभ्युवाच  ॥ ००३  ॥

एतेन तूर्णं प्रतिपादयेमा ;ञ्श्वेतान्हयान्काञ्चनरश्मियोक्त्रान् ।
जवेन सर्वेण कुरु प्रयत्न ;मासादयैतद्रथसिंहवृन्दम्  ॥ ००४  ॥

गजो गजेनेव मया दुरात्मा ; यो योद्धुमाकाङ्क्षति सूतपुत्रः ।
तमेव मां प्रापय राजपुत्र ; दुर्योधनापाश्रयजातदर्पम्  ॥ ००५  ॥

स तैर्हयैर्वातजवैर्बृहद्भिः ; पुत्रो विराटस्य सुवर्णकक्ष्यैः ।
विध्वंसयंस्तद्रथिनामनीकं ; ततोऽवहत्पाण्डवमाजिमध्ये  ॥ ००६  ॥

तं चित्रसेनो विशिखैर्विपाठैः ; सङ्ग्रामजिच्छत्रुसहो जयश्च ।
प्रत्युद्ययुर्भारतमापतन्तं ; महारथाः कर्णमभीप्समानाः ॥ ००७ ॥

ततः स तेषां पुरुषप्रवीरः ; शरासनार्चिः शरवेगतापः ।
व्रातान्रथानामदहत्स मन्यु ;र्वनं यथाग्निः कुरुपुङ्गवानाम् ॥ ००८ ॥

तस्मिंस्तु युद्धे तुमुले प्रवृत्ते ; पार्थं विकर्णोऽतिरथं रथेन ।
विपाठवर्षेण कुरुप्रवीरो ; भीमेन भीमानुजमाससाद ॥ ००९ ॥

ततो विकर्णस्य धनुर्विकृष्य ; जाम्बूनदाग्र्योपचितं दृढज्यम् ।
अपातयद्ध्वजमस्य प्रमथ्य ; छिन्नध्वजः सोऽप्यपयाज्जवेन ॥ ०१० ॥

तं शात्रवाणां गणबाधितारं ; कर्माणि कुर्वाणममानुषाणि ।
शत्रुंतपः कोपममृष्यमाणः ; समर्पयत्कूर्मनखेन पार्थम् ॥ ०११ ॥

स तेन राज्ञातिरथेन विद्धो ; विगाहमानो ध्वजिनीं कुरूणाम् ।
शत्रुंतपं पञ्चभिराशु विद्ध्वा ; ततोऽस्य सूतं दशभिर्जघान ॥ ०१२ ॥

ततः स विद्धो भरतर्षभेण ; बाणेन गात्रावरणातिगेन ।
गतासुराजौ निपपात भूमौ ; नगो नगाग्रादिव वातरुग्णः ॥ ०१३ ॥

रथर्षभास्ते तु रथर्षभेण ; वीरा रणे वीरतरेण भग्नाः ।
चकम्पिरे वातवशेन काले ; प्रकम्पितानीव महावनानि ॥ ०१४ ॥

हतास्तु पार्थेन नरप्रवीरा ; भूमौ युवानः सुषुपुः सुवेषाः ।
वसुप्रदा वासवतुल्यवीर्याः ; पराजिता वासवजेन संख्ये ॥ ०१५ ॥

सुवर्णकार्ष्णायसवर्मनद्धा ; नागा यथा हैमवताः प्रवृद्धाः ॥ ०१५ ॥

तथा स शत्रून्समरे विनिघ्न ;न्गाण्डीवधन्वा पुरुषप्रवीरः ।

चचार संख्ये प्रदिशो दिशश्च ; दहन्निवाग्निर्वनमातपान्ते ॥ ०१६ ॥

प्रकीर्णपर्णानि यथा वसन्ते ; विशातयित्वात्यनिलो नुदन्खे ।
तथा सपत्नान्विकिरन्किरीटी ; चचार संख्येऽतिरथो रथेन ॥ ०१७ ॥

शोणाश्ववाहस्य हयान्निहत्य ; वैकर्तनभ्रातुरदीनसत्त्वः ।
एकेन सङ्ग्रामजितः शरेण ; शिरो जहाराथ किरीटमाली ॥ ०१८ ॥

तस्मिन्हते भ्रातरि सूतपुत्रो ; वैकर्तनो वीर्यमथाददानः ।
प्रगृह्य दन्ताविव नागराजो ; महर्षभं व्याघ्र इवाभ्यधावत् ॥ ०१९ ॥

स पाण्डवं द्वादशभिः पृषत्कै ;वैंकर्तनः शीघ्रमुपाजघान ।
विव्याध गात्रेषु हयांश्च सर्वा ;न्विराटपुत्रं च शरैर्निजघ्ने ॥ ०२० ॥

स हस्तिनेवाभिहतो गजेन्द्रः ; प्रगृह्य भल्लान्निशितान्निषङ्गात् ।
आकर्णपूर्णं च धनुर्विकृष्य ; विव्याध बाणैरथ सूतपुत्रम् ॥ ०२१ ॥

अथास्य बाहूरुशिरोललाटं ; ग्रीवां रथाङ्गानि परावमर्दी ।
स्थितस्य बाणैर्युधि निर्बिभेद ; गाण्डीवमुक्तैरशनिप्रकाशैः ॥ ०२२ ॥

स पार्थमुक्तैर्विशिखैः प्रणुन्नो ; गजो गजेनेव जितस्तरस्वी ।
विहाय सङ्ग्रामशिरः प्रयातो ; वैकर्तनः पाण्डवबाणतप्तः ॥ ०२३ ॥

---

# अध्याय ०५०

वैशंपायन उवाच ॥

अपयाते तु राधेये दुर्योधनपुरोगमाः ।
अनीकेन यथास्वेन शरैराच्छॅन्त पाण्डवम् ॥ ००१ ॥

बहुधा तस्य सैन्यस्य व्यूढस्यापततः शरैः ।
अभियानीयमाज्ञाय वैराटिरिदमब्रवीत् ॥ ००२ ॥

आस्थाय रुचिरं जिष्णो रथं सारथिना मया ।
कतमद्यास्यसेऽनीकमुक्तो यास्याम्यहं त्वया ॥ ००३ ॥

अर्जुन उवाच ॥

लोहिताक्षमरिष्टं यं वैयाघ्रमनुपश्यसि ।
नीलां पताकामाश्रित्य रथे तिष्ठन्तमुत्तर ॥ ००४ ॥

कृपस्यैतद्रथानीकं प्रापयस्वैतदेव माम् ।
एतस्य दर्शयिष्यामि शीघ्रास्त्रं दृढधन्विनः ॥ ००५ ॥

कमण्डलुर्ध्वजे यस्य शातकुम्भमयः शुभः ।
आचार्य एष वै द्रोणः सर्वशस्त्रभृतां वरः ॥ ००६ ॥

सुप्रसन्नमना वीर कुरुष्वैनं प्रदक्षिणम् ।
अत्रैव चाविरोधेन एष धर्मः सनातनः ॥ ००७ ॥

यदि मे प्रथमं द्रोणः शरीरे प्रहरिष्यति ।
ततोऽस्य प्रहरिष्यामि नास्य कोपो भविष्यति ॥ ००८ ॥

अस्याविदूरे तु धनुर्ध्वजाग्रे यस्य दृश्यते ।
आचार्यस्यैष पुत्रो वै अश्वत्थामा महारथः ॥ ००९ ॥

सदा ममैष मान्यश्च सर्वशस्त्रभृतामपि ।
एतस्य त्वं रथं प्राप्य निवर्तेथाः पुनः पुनः ॥ ०१० ॥

य एष तु रथानीके सुवर्णकवचावृतः ।
सेनाग्र्येण तृतीयेन व्यवहार्येण तिष्ठति ॥ ०११ ॥

यस्य नागो ध्वजाग्रे वै हेमकेतनसंश्रितः ।
धृतराष्ट्रात्मजः श्रीमानेष राजा सुयोधनः ॥ ०१२ ॥

एतस्याभिमुखं वीर रथं पररथारुजः ।
प्रापयस्वैष तेजोभिप्रमाथी युद्धदुर्मदः ॥ ०१३ ॥

एष द्रोणस्य शिष्याणां शीघ्रास्त्रः प्रथमो मतः ।
एतस्य दर्शयिष्यामि शीघ्रास्त्रं विपुलं शरैः ॥ ०१४ ॥

नागकक्ष्या तु रुचिरा ध्वजाग्रे यस्य तिष्ठति ।
एष वैकर्तनः कर्णो विदितः पूर्वमेव ते ॥ ०१५ ॥

एतस्य रथमास्थाय राधेयस्य दुरात्मनः ।
यत्तो भवेथाः सङ्ग्रामे स्पर्धत्येष मया सदा ॥ ०१६ ॥

यस्तु नीलानुसारेण पञ्चतारेण केतुना ।
हस्तावापी बृहद्धन्वा रथे तिष्ठति वीर्यवान् ॥ ०१७ ॥

यस्य तारार्कचित्रोऽसौ रथे ध्वजवरः स्थितः ।
यस्यैतत्पाण्डुरं छत्रं विमलं मूर्ध्नि तिष्ठति ॥ ०१८ ॥

महतो रथवंशस्य नानाध्वजपताकिनः ।
बलाहकाग्रे सूर्यो वा य एष प्रमुखे स्थितः ॥ ०१९ ॥

हैमं चन्द्रार्कसङ्काशं कवचं यस्य दृश्यते ।
जातरूपशिरस्त्राणस्त्रासयन्निव मे मनः ॥ ०२० ॥

एष शांतनवो भीष्मः सर्वेषां नः पितामहः ।
राजश्रियावबद्धस्तु दुर्योधनवशानुगः ॥ ०२१ ॥

पश्चादेष प्रयातव्यो न मे विघ्नकरो भवेत् ।
एतेन युध्यमानस्य यत्तः संयच्छ मे हयान् ॥ ०२२ ॥

ततोऽभ्यवहदव्यग्रो वैराटिः सव्यसाचिनम् ।
यत्रातिष्ठत्कृपो राजन्योत्स्यमानो धनञ्जयम् ॥ ०२३ ॥

---

# अध्याय ०५१

वैशंपायन उवाच ॥

तान्यनीकान्यदृश्यन्त कुरूणामुग्रधन्विनाम् ।
संसर्पन्तो यथा मेघा घर्मान्ते मन्दमारुताः ॥ ००१ ॥

अभ्याशे वाजिनस्तस्थुः समारूढाः प्रहारिभिः ।
भीमरूपाश्च मातङ्गास्तोमराङ्कुशचोदिताः ॥ ००२ ॥

ततः शक्रः सुरगणैः समारुह्य सुदर्शनम् ।
सहोपायात्तदा राजन्विश्वाश्विमरुतां गणैः ॥ ००३ ॥

तद्देवयक्षगन्धर्वमहोरगसमाकुलम् ।
शुशुभेऽभ्रविनिर्मुक्तं ग्रहैरिव नभस्तलम् ॥ ००४ ॥

अस्त्राणां च बलं तेषां मानुषेषु प्रयुज्यताम् ।
तच्च घोरं महद्युद्धं भीष्मार्जुनसमागमे ॥ ००५ ॥

शतं शतसहस्राणां यत्र स्थूणा हिरण्मयाः ।
मणिरत्नमयाश्चान्याः प्रासादमुपधारयन् ॥ ००६ ॥

तत्र कामगमं दिव्यं सर्वरत्नविभूषितम् ।
विमानं देवराजस्य शुशुभे खेचरं तदा ॥ ००७ ॥

तत्र देवास्त्रयस्त्रिंशत्तिष्ठन्ति सहवासवाः ।
गन्धर्वा राक्षसाः सर्पाः पितरश्च महर्षिभिः ॥ ००८ ॥

तथा राजा वसुमना बलाक्षः सुप्रतर्दनः ।
अष्टकश्च शिबिश्चैव ययातिर्नहुषो गयः ॥ ००९ ॥

मनुः क्षुपो रघुर्भानुः कृशाश्वः सगरः शलः ।
विमाने देवराजस्य समदृश्यन्त सुप्रभाः ॥ ०१० ॥

अग्नेरीशस्य सोमस्य वरुणस्य प्रजापतेः ।
तथा धातुर्विधातुश्च कुबेरस्य यमस्य च ॥ ०११ ॥

अलम्बुसोग्रसेनस्य गन्धर्वस्य च तुम्बुरोः ।
यथाभागं यथोद्देशं विमानानि चकाशिरे ॥ ०१२ ॥

सर्वदेवनिकायाश्च सिद्धाश्च परमर्षयः ।
अर्जुनस्य कुरूणां च द्रष्टुं युद्धमुपागताः ॥ ०१३ ॥

दिव्यानां तत्र माल्यानां गन्धः पुण्योऽथ सर्वशः ।
प्रससार वसन्ताग्रे वनानामिव पुष्पिताम् ॥ ०१४ ॥

रक्तारक्तानि देवानां समदृश्यन्त तिष्ठताम् ।
आतपत्राणि वासांसि स्रजश्च व्यजनानि च ॥ ०१५ ॥

उपशाम्यद्रजो भौमं सर्वं व्याप्तं मरीचिभिः ।

दिव्यान्गन्धानुपादाय वायुर्योधानसेवत ॥ ०१६ ॥

प्रभासितमिवाकाशं चित्ररूपमलङ्कृतम् ।
संपतद्भिः स्थितैश्चैव नानारत्नावभासितैः ॥ ०१७ ॥

विमानैर्विविधैश्चित्रैरुपानीतैः सुरोत्तमैः ॥ ०१७ ॥

---

# अध्याय ०५२

वैशंपायन उवाच ॥

एतस्मिन्नन्तरे तत्र महावीर्यपराक्रमः ।
आजगाम महासत्त्वः कृपः शस्त्रभृतां वरः ॥ ००१ ॥

अर्जुनं प्रति संयोद्धुं युद्धार्थी स महारथः ॥ ००१ ॥

तौ रथौ सूर्यसङ्काशौ योत्स्यमानौ महाबलौ ।
शारदाविव जीमूतौ व्यरोचेतां व्यवस्थितौ ॥ ००२ ॥

पार्थोऽपि विश्रुतं लोके गाण्डीवं परमायुधम् ।
विकृष्य चिक्षेप बहून्नाराचान्मर्मभेदिनः ॥ ००३ ॥

तानप्राप्ताञ्शितैर्बाणैर्नाराचान्रक्तभोजनान् ।
कृपश्चिच्छेद पार्थस्य शतशोऽथ सहस्रशः ॥ ००४ ॥

ततः पार्थश्च सङ्क्रुद्धश्चित्रान्मार्गान्प्रदर्शयन् ।
दिशः संछादयन्बाणैः प्रदिशश्च महारथः ॥ ००५ ॥

एकच्छायमिवाकाशं प्रकुर्वन्सर्वतः प्रभुः ।
प्रच्छादयदमेयात्मा पार्थः शरशतैः कृपम् ॥ ००६ ॥

स शरैरर्पितः क्रुद्धः शितैरग्निशिखोपमैः ।
तूर्णं शरसहस्रेण पार्थमप्रतिमौजसम् ॥ ००७ ॥

अर्पयित्वा महात्मानं ननाद समरे कृपः ॥ ००७ ॥

ततः कनकपुङ्खाग्रैर्वीरः संनतपर्वभिः ।
त्वरन्गाण्डीवनिर्मुक्तैरर्जुनस्तस्य वाजिनः ॥ ००८ ॥

चतुर्भिश्चतुरस्तीक्ष्णैरविध्यत्परमेषुभिः ॥ ००८ ॥

ते हया निशितैर्विद्धा ज्वलद्भिरिव पन्नगैः ।
उत्पेतुः सहसा सर्वे कृपः स्थानादथाच्यवत् ॥ ००९ ॥

च्युतं तु गौतमं स्थानात्समीक्ष्य कुरुनन्दनः ।
नाविध्यत्परवीरघ्नो रक्षमाणोऽस्य गौरवम् ॥ ०१० ॥

स तु लब्ध्वा पुनः स्थानं गौतमः सव्यसाचिनम् ।
विव्याध दशभिर्बाणैस्त्वरितः कङ्कपत्रिभिः ॥ ०११ ॥

ततः पार्थो धनुस्तस्य भल्लेन निशितेन च ।
चिच्छेदैकेन भूयश्च हस्ताच्चापमथाहरत् ॥ ०१२ ॥

अथास्य कवचं बाणैर्निशितैर्मर्मभेदिभिः ।
व्यधमन्न च पार्थोऽस्य शरीरमवपीडयत् ॥ ०१३ ॥

तस्य निर्मुच्यमानस्य कवचात्काय आबभौ ।
समये मुच्यमानस्य सर्पस्येव तनुर्यथा ॥ ०१४ ॥

छिन्ने धनुषि पार्थेन सोऽन्यदादाय कार्मुकम् ।
चकार गौतमः सज्यं तदद्भुतमिवाभवत्  ॥ ०१५  ॥

स तदप्यस्य कौन्तेयश्चिच्छेद नतपर्वणा ।
एवमन्यानि चापानि बहूनि कृतहस्तवत्  ॥ ०१६  ॥

शारद्वतस्य चिच्छेद पाण्डवः परवीरहा  ॥ ०१६  ॥

स छिन्नधनुरादाय अथ शक्तिं प्रतापवान् ।
प्राहिणोत्पाण्डुपुत्राय प्रदीप्तामशनीमिव  ॥ ०१७  ॥

तामर्जुनस्तदायान्तीं शक्तिं हेमविभूषिताम् ।
वियद्गतां महोल्काभां चिच्छेद दशभिः शरैः  ॥ ०१८  ॥

सापतद्दशधा छिन्ना भूमौ पार्थेन धीमता  ॥ ०१८  ॥

युगमध्ये तु भल्लैस्तु ततः स सधनुः कृपः ।
तमाशु निशितैः पार्थं बिभेद दशभिः शरैः  ॥ ०१९  ॥

ततः पार्थो महातेजा विशिखानग्नितेजसः ।
चिक्षेप समरे क्रुद्धस्त्रयोदश शिलाशितान्  ॥ ०२०  ॥

अथास्य युगमेकेन चतुर्भिश्चतुरो हयान् ।
षष्ठेन च शिरः कायाच्छरेण रथसारथेः  ॥ ०२१  ॥

त्रिभिस्त्रिवेणुं समरे द्वाभ्यामक्षौ महाबलः ।
द्वादशेन तु भल्लेन चकर्तास्य ध्वजं तथा  ॥ ०२२  ॥

ततो वज्रनिकाशेन फल्गुनः प्रहसन्निव ।
त्रयोदशेनेन्द्रसमः कृपं वक्षस्यताडयत्  ॥ ०२३  ॥

स छिन्नधन्वा विरथो हताश्वो हतसारथिः ।
गदापाणिरवप्लुत्य तूर्णं चिक्षेप तां गदाम् ॥ ०२४ ॥

सा तु मुक्ता गदा गुर्वी कृपेण सुपरिष्कृता ।
अर्जुनेन शरैर्नुन्ना प्रतिमार्गमथागमत् ॥ ०२५ ॥

ततो योधाः परीप्सन्तः शारद्वतममर्षणम् ।
सर्वतः समरे पार्थं शरवर्षैरवाकिरन् ॥ ०२६ ॥

ततो विराटस्य सुतः सव्यमावृत्य वाजिनः ।
यमकं मण्डलं कृत्वा तान्योधान्प्रत्यवारयत् ॥ ०२७ ॥

ततः कृपमुपादाय विरथं ते नरर्षभाः ।
अपाजह्रुर्महावेगाः कुन्तीपुत्राद्धनञ्जयात् ॥ ०२८ ॥

---

# अध्याय ०५३

अर्जुन उवाच ॥

यत्रैषा काञ्चनी वेदी प्रदीप्ताग्निशिखोपमा ।
उच्छ्रिता काञ्चने दण्डे पताकाभिरलङ्कृता ॥ ००१ ॥

तत्र मां वह भद्रं ते द्रोणानीकाय मारिष ॥ ००१ ॥

अश्वाः शोणाः प्रकाशन्ते बृहन्तश्चारुवाहिनः ।
स्निग्धविद्रुमसङ्काशास्ताम्रास्याः प्रियदर्शनाः ॥ ००२ ॥

युक्ता रथवरे यस्य सर्वशिक्षाविशारदाः ॥ ००२ ॥

दीर्घबाहुर्महातेजा बलरूपसमन्वितः ।
सर्वलोकेषु विख्यातो भारद्वाजः प्रतापवान् ॥ ००३ ॥

बुद्ध्या तुल्यो ह्युशनसा बृहस्पतिसमो नये ।
वेदास्तथैव चत्वारो ब्रह्मचर्यं तथैव च ॥ ००४ ॥

ससंहाराणि दिव्यानि सर्वाण्यस्त्राणि मारिष ।
धनुर्वेदश्च कार्त्स्न्येन यस्मिन्नित्यं प्रतिष्ठितः ॥ ००५ ॥

क्षमा दमश्च सत्यं च आनृशंस्यमथार्जवम् ।
एते चान्ये च बहवो गुणा यस्मिन्द्विजोत्तमे ॥ ००६ ॥

तेनाहं योद्धुमिच्छामि महाभागेन संयुगे ।
तस्मात्त्वं प्रापयाचार्यं क्षिप्रमुत्तर वाहय ॥ ००७ ॥

वैशंपायन उवाच ॥

अर्जुनेनैवमुक्तस्तु वैराटिर्हेमभूषितान् ।
चोदयामास तानश्वान्भारद्वाजरथं प्रति ॥ ००८ ॥

तमापतन्तं वेगेन पाण्डवं रथिनां वरम् ।
द्रोणः प्रत्युद्ययौ पार्थं मत्तो मत्तमिव द्विपम् ॥ ००९ ॥

ततः प्राध्मापयच्छङ्खं भेरीशतनिनादितम् ।
प्रचुक्षुभे बलं सर्वमुद्धूत इव सागरः ॥ ०१० ॥

अथ शोणान्सदश्वांस्तान्हंसवर्णैर्मनोजवैः ।
मिश्रितान्समरे दृष्ट्वा व्यस्मयन्त रणे जनाः ॥ ०११ ॥

तौ रथौ वीर्यसंपन्नौ दृष्ट्वा सङ्ग्राममूर्धनि ।
आचार्यशिष्यावजितौ कृतविद्यौ मनस्विनौ ॥ ०१२ ॥

समाश्लिष्टौ तदान्योन्यं द्रोणपार्थौ महाबलौ ।
दृष्ट्वा प्राकम्पत मुहुर्भरतानां महद्बलम् ॥ ०१३ ॥

हर्षयुक्तस्तथा पार्थः प्रहसन्निव वीर्यवान् ।
रथं रथेन द्रोणस्य समासाद्य महारथः ॥ ०१४ ॥

अभिवाद्य महाबाहुः सान्त्वपूर्वमिदं वचः ।
उवाच श्लक्ष्णया वाचा कौन्तेयः परवीरहा ॥ ०१५ ॥

उषिताः स्म वने वासं प्रतिकर्म चिकीर्षवः ।
कोपं नार्हसि नः कर्तुं सदा समरदुर्जय ॥ ०१६ ॥

अहं तु प्रहृते पूर्वं प्रहरिष्यामि तेऽनघ ।
इति मे वर्तते बुद्धिस्तद्भवान्कर्तुमर्हति ॥ ०१७ ॥

ततोऽस्मै प्राहिणोद्द्रोणः शरानधिकविंशतिम् ।
अप्राप्तांश्चैव तान्पार्थश्चिच्छेद कृतहस्तवत् ॥ ०१८ ॥

ततः शरसहस्रेण रथं पार्थस्य वीर्यवान् ।
अवाकिरत्ततो द्रोणः शीघ्रमस्त्रं विदर्शयन् ॥ ०१९ ॥

एवं प्रववृते युद्धं भारद्वाजकिरीटिनोः ।
समं विमुञ्चतोः संख्ये विशिखान्दीप्ततेजसः ॥ ०२० ॥

तावुभौ ख्यातकर्माणावुभौ वायुसमौ जवे ।
उभौ दिव्यास्त्रविदुषावुभावुत्तमतेजसौ ॥ ०२१ ॥

क्षिपन्तौ शरजालानि मोहयामासतुर्नृपान् ॥ ०२१ ॥

व्यस्मयन्त ततो योधाः सर्वे तत्र समागताः ।
शरान्विसृजतोस्तूर्णं साधु साध्विति पूजयन् ॥ ०२२ ॥

द्रोणं हि समरे कोऽन्यो योद्धुमर्हति फल्गुनात् ।
रौद्रः क्षत्रियधर्मोऽयं गुरुणा यदयुध्यत ॥ ०२३ ॥

इत्यब्रुवञ्जनास्तत्र सङ्ग्रामशिरसि स्थिताः ॥ ०२३ ॥

वीरौ तावपि संरब्धौ संनिकृष्टौ महारथौ ।
छादयेतां शरव्रातैरन्योन्यमपराजितौ ॥ ०२४ ॥

विस्फार्य सुमहच्चापं हेमपृष्ठं दुरासदम् ।
संरब्धोऽथ भरद्वाजः फल्गुनं प्रत्ययुध्यत ॥ ०२५ ॥

स सायकमयैर्जालैरर्जुनस्य रथं प्रति ।
भानुमद्भिः शिलाधौतैर्भानोः प्रच्छादयत्प्रभाम् ॥ ०२६ ॥

पार्थं च स महाबाहुर्महावेगैर्महारथः ।
विव्याध निशितैर्बाणैर्मेघो वृष्ट्येव पर्वतम् ॥ ०२७ ॥

तथैव दिव्यं गाण्डीवं धनुरादाय पाण्डवः ।
शत्रुघ्नं वेगवद्धृष्टो भारसाधनमुत्तमम् ॥ ०२८ ॥

विससर्ज शरांश्चित्रान्सुवर्णविकृतान्बहून् ॥ ०२८ ॥

नाशयञ्शरवर्षाणि भारद्वाजस्य वीर्यवान् ।
तूर्णं चापविनिर्मुक्तैस्तदद्भुतमिवाभवत् ॥ ०२९ ॥

स रथेन चरन्पार्थः प्रेक्षणीयो धनञ्जयः ।
युगपद्दिक्षु सर्वासु सर्वशस्त्राण्यदर्शयत् ॥ ०३० ॥

एकच्छायमिवाकाशं बाणैश्चक्रे समन्ततः ।
नादृश्यत तदा द्रोणो नीहारेणेव संवृतः ॥ ०३१ ॥

तस्याभवत्तदा रूपं संवृतस्य शरोत्तमैः ।
जाज्वल्यमानस्य यथा पर्वतस्येव सर्वतः ॥ ०३२ ॥

दृष्ट्वा तु पार्थस्य रणे शरैः स्वरथमावृतम् ।
स विस्फार्य धनुश्चित्रं मेघस्तनितनिस्वनम् ॥ ०३३ ॥

अग्निचक्रोपमं घोरं विकर्षन्परमायुधम् ।
व्यशातयच्छरांस्तांस्तु द्रोणः समितिशोभनः ॥ ०३४ ॥

महानभूत्ततः शब्दो वंशानामिव दह्यताम् ॥ ०३४ ॥

जाम्बूनदमयैः पुङ्खैश्चित्रचापवरातिगैः ।
प्राच्छादयदमेयात्मा दिशः सूर्यस्य च प्रभाम् ॥ ०३५ ॥

ततः कनकपुङ्खानां शराणां नतपर्वणाम् ।
वियच्चराणां वियति दृश्यन्ते बहुशः प्रजाः ॥ ०३६ ॥

द्रोणस्य पुङ्खसक्ताश्च प्रभवन्तः शरासनात् ।
एको दीर्घ इवादृश्यदाकाशे संहतः शरः ॥ ०३७ ॥

एवं तौ स्वर्णविकृतान्विमुञ्चन्तौ महाशरान् ।
आकाशं संवृतं वीरावुल्काभिरिव चक्रतुः ॥ ०३८ ॥

शरास्तयोश्च विबभुः कङ्कबर्हिणवाससः ।
पङ्क्त्यः शरदि खस्थानां हंसानां चरतामिव ॥ ०३९ ॥

युद्धं समभवत्तत्र सुसंरब्धं महात्मनोः ।

द्रोणपाण्डवयोर्घोरं वृत्रवासवयोरिव ॥ ०४० ॥

तौ गजाविव चासाद्य विषाणाग्रैः परस्परम् ।
शरैः पूर्णायतोत्सृष्टैरन्योन्यमभिजघ्नतुः ॥ ०४१ ॥

तौ व्यवाहरतां शूरौ संरब्धौ रणशोभिनौ ।
उदीरयन्तौ समरे दिव्यान्यस्त्राणि भागशः ॥ ०४२ ॥

अथ त्वाचार्यमुख्येन शरान्सृष्टाञ्शिलाशितान् ।
न्यवारयच्छितैर्बाणैरर्जुनो जयतां वरः ॥ ०४३ ॥

दर्शयन्नैन्द्रिरात्मानमुग्रमुग्रपराक्रमः ।
इषुभिस्तूर्णमाकाशं बहुभिश्च समावृणोत् ॥ ०४४ ॥

जिघांसन्तं नरव्याघ्रमर्जुनं तिग्मतेजसम् ।
आचार्यमुख्यः समरे द्रोणः शस्त्रभृतां वरः ॥ ०४५ ॥

अर्जुनेन सहाक्रीडच्छरैः संनतपर्वभिः ॥ ०४५ ॥

दिव्यान्यस्त्राणि मुञ्चन्तं भारद्वाजं महारणे ।
अस्त्रैरस्त्राणि संवार्य फल्गुनः समयोधयत् ॥ ०४६ ॥

तयोरासीत्संप्रहारः क्रुद्धयोर्नरसिंहयोः ।
अमर्षिणोस्तदान्योन्यं देवदानवयोरिव ॥ ०४७ ॥

ऐन्द्रं वायव्यमाग्नेयमस्त्रमस्त्रेण पाण्डवः ।
द्रोणेन मुक्तं मुक्तं तु ग्रसते स्म पुनः पुनः ॥ ०४८ ॥

एवं शूरौ महेष्वासौ विसृजन्तौ शिताञ्शरान् ।
एकच्छायं चक्रतुस्तावाकाशं शरवृष्टिभिः ॥ ०४९ ॥

ततोऽर्जुनेन मुक्तानां पततां च शरीरिषु ।
पर्वतेष्विव वज्राणां शराणां श्रूयते स्वनः ॥ ०५० ॥

ततो नागा रथाश्चैव सादिनश्च विशां पते ।
शोणिताक्ता व्यदृश्यन्त पुष्पिता इव किंशुकाः ॥ ०५१ ॥

बाहुभिश्च सकेयूरैर्विचित्रैश्च महारथैः ।
सुवर्णचित्रैः कवचैर्ध्वजैश्च विनिपातितैः ॥ ०५२ ॥

योधैश्च निहतैस्तत्र पार्थबाणप्रपीडितैः ।
बलमासीत्समुद्भ्रान्तं द्रोणार्जुनसमागमे ॥ ०५३ ॥

विधुन्वानौ तु तौ वीरौ धनुषी भारसाधने ।
आच्छादयेतामन्योन्यं तितक्षन्तौ रणेषुभिः ॥ ०५४ ॥

अथान्तरिक्षे नादोऽभूद्द्रोणं तत्र प्रशंसताम् ।
दुष्करं कृतवान्द्रोणो यदर्जुनमयोधयत् ॥ ०५५ ॥

प्रमाथिनं महावीर्यं दृढमुष्टिं दुरासदम् ।
जेतारं देवदैत्यानां सर्पाणां च महारथम् ॥ ०५६ ॥

अविश्रमं च शिक्षां च लाघवं दूरपातिताम् ।
पार्थस्य समरे दृष्ट्वा द्रोणस्याभूच्च विस्मयः ॥ ०५७ ॥

अथ गाण्डीवमुद्यम्य दिव्यं धनुरमर्षणः ।
विचकर्ष रणे पार्थो बाहुभ्यां भरतर्षभ ॥ ०५८ ॥

तस्य बाणमयं वर्षं शलभानामिवायतम् ।
न च बाणान्तरे वायुरस्य शक्नोति सर्पितुम् ॥ ०५९ ॥

अनिशं संदधानस्य शरानुत्सृजतस्तदा ।

ददृशे नान्तरं किञ्चित्पार्थस्याददतोऽपि च ॥ ०६० ॥

तथा शीघ्रास्त्रयुद्धे तु वर्तमाने सुदारुणे ।
शीघ्राच्छीघ्रतरं पार्थः शरानन्यानुदीरयत् ॥ ०६१ ॥

ततः शतसहस्राणि शराणां नतपर्वणाम् ।
युगपत्प्रापतंस्तत्र द्रोणस्य रथमन्तिकात् ॥ ०६२ ॥

अवकीर्यमाणे द्रोणे तु शरैर्गाण्डीवधन्वना ।
हाहाकारो महानासीत्सैन्यानां भरतर्षभ ॥ ०६३ ॥

पाण्डवस्य तु शीघ्रास्त्रं मघवान्समपूजयत् ।
गन्धर्वाप्सरसश्चैव ये च तत्र समागताः ॥ ०६४ ॥

ततो वृन्देन महता रथानां रथयूथपः ।
आचार्यपुत्रः सहसा पाण्डवं प्रत्यवारयत् ॥ ०६५ ॥

अश्वत्थामा तु तत्कर्म हृदयेन महात्मनः ।
पूजयामास पार्थस्य कोपं चास्याकरोद्भृशम् ॥ ०६६ ॥

स मन्युवशमापन्नः पार्थमभ्यद्रवद्रणे ।
किरञ्शरसहस्राणि पर्जन्य इव वृष्टिमान् ॥ ०६७ ॥

आवृत्य तु महाबाहुर्यतो द्रौणिस्ततो हयान् ।
अन्तरं प्रददौ पार्थो द्रोणस्य व्यपसर्पितुम् ॥ ०६८ ॥

स तु लब्ध्वान्तरं तूर्णमपायाज्जवनैर्हयैः ।
छिन्नवर्मध्वजः शूरो निकृत्तः परमेषुभिः ॥ ०६९ ॥

# अध्याय ०५४

वैशंपायन उवाच ॥

तं पार्थः प्रतिजग्राह वायुवेगमिवोद्धतम् ।
शरजालेन महता वर्षमाणमिवाम्बुदम् ॥ ००१ ॥

तयोर्देवासुरसमः संनिपातो महानभूत् ।
किरतोः शरजालानि वृत्रवासवयोरिव ॥ ००२ ॥

न स्म सूर्यस्तदा भाति न च वाति समीरणः ।
शरगाढे कृते व्योम्नि छायाभूते समन्ततः ॥ ००३ ॥

महांश्चटचटाशब्दो योधयोर्हन्यमानयोः ।
दह्यतामिव वेणूनामासीत्परपुरञ्जय ॥ ००४ ॥

हयानस्यार्जुनः सर्वान्कृतवानल्पजीवितान् ।
स राजन्न प्रजानाति दिशं काञ्चन मोहितः ॥ ००५ ॥

ततो द्रौणिर्महावीर्यः पार्थस्य विचरिष्यतः ।
विवरं सूक्ष्ममालोक्य ज्यां चिच्छेद क्षुरेण ह ॥ ००६ ॥

तदस्यापूजयन्देवाः कर्म दृष्ट्वातिमानुषम् ॥ ००६ ॥

ततो द्रौणिर्धनूंष्यष्टौ व्यपक्रम्य नरर्षभम् ।
पुनरभ्याहनत्पार्थं हृदये कङ्कपत्रिभिः ॥ ००७ ॥

ततः पार्थो महाबाहुः प्रहस्य स्वनवत्तदा ।
योजयामास नवया मौर्व्या गाण्डीवमोजसा ॥ ००८ ॥

ततोऽर्धचन्द्रमावृत्य तेन पार्थः समागमत् ।

वारणेनेव मत्तेन मत्तो वारणयूथपः ॥ ००९ ॥

ततः प्रववृते युद्धं पृथिव्यामेकवीरयोः ।
रणमध्ये द्वयोरेव सुमहल्लोमहर्षणम् ॥ ०१० ॥

तौ वीरौ कुरवः सर्वे ददृशुर्विस्मयान्विताः ।
युध्यमानौ महात्मानौ यूथपाविव सङ्गतौ ॥ ०११ ॥

तौ समाजघ्नतुर्वीरावन्योन्यं पुरुषर्षभौ ।
शरैराशीविषाकारैर्ज्वलद्भिरिव पन्नगैः ॥ ०१२ ॥

अक्षय्याविषुधी दिव्यौ पाण्डवस्य महात्मनः ।
तेन पार्थो रणे शूरस्तस्थौ गिरिरिवाचलः ॥ ०१३ ॥

अश्वत्थाम्नः पुनर्बाणाः क्षिप्रमभ्यस्यतो रणे ।
जग्मुः परिक्षयं शीघ्रमभूत्तेनाधिकोऽर्जुनः ॥ ०१४ ॥

ततः कर्णो महच्चापं विकृष्याभ्यधिकं रुषा ।
अवाक्षिपत्ततः शब्दो हाहाकारो महानभूत् ॥ ०१५ ॥

तत्र चक्षुर्दधे पार्थो यत्र विस्फार्यते धनुः ।
ददर्श तत्र राधेयं तस्य कोपोऽत्यवीवृधत् ॥ ०१६ ॥

स रोषवशमापन्नः कर्णमेव जिघांसया ।
अवैक्षत विवृत्ताभ्यां नेत्राभ्यां कुरुपुङ्गवः ॥ ०१७ ॥

तथा तु विमुखे पार्थे द्रोणपुत्रस्य सायकान् ।
त्वरिताः पुरुषा राजन्नुपाजह्रुः सहस्रशः ॥ ०१८ ॥

उत्सृज्य च महाबाहुर्द्रोणपुत्रं धनञ्जयः ।
अभिदुद्राव सहसा कर्णमेव सपत्नजित् ॥ ०१९ ॥

तमभिद्रुत्य कौन्तेयः क्रोधसंरक्तलोचनः ।
कामयन्द्वैरथे युद्धमिदं वचनमब्रवीत्  ॥ ०२०  ॥

---

# अध्याय ०५५

अर्जुन उवाच  ॥

कर्ण यत्ते सभामध्ये बहु वाचा विकत्थितम् ।
न मे युधि समोऽस्तीति तदिदं प्रत्युपस्थितम्  ॥ ००१  ॥

अवोचः परुषा वाचो धर्ममुत्सृज्य केवलम् ।
इदं तु दुष्करं मन्ये यदिदं ते चिकीर्षितम्  ॥ ००२  ॥

यत्त्वया कथितं पूर्वं मामनासाद्य किञ्चन ।
तदद्य कुरु राधेय कुरुमध्ये मया सह  ॥ ००३  ॥

यत्सभायां स्म पाञ्चालीं क्लिश्यमानां दुरात्मभिः ।
दृष्टवानसि तस्याद्य फलमाप्नुहि केवलम्  ॥ ००४  ॥

धर्मपाशनिबद्धेन यन्मया मर्षितं पुरा ।
तस्य राधेय कोपस्य विजयं पश्य मे मृधे  ॥ ००५  ॥

एहि कर्ण मया सार्धं प्रतिपद्यस्व सङ्गरम् ।
प्रेक्षकाः कुरवः सर्वे भवन्तु सहसैनिकाः  ॥ ००६  ॥

कर्ण उवाच  ॥

ब्रवीषि वाचा यत्पार्थ कर्मणा तत्समाचर ।
अतिशेते हि वै वाचं कर्मेति प्रथितं भुवि ॥ ००७ ॥

यत्त्वया मर्षितं पूर्वं तदशक्तेन मर्षितम् ।
इति गृह्णामि तत्पार्थ तव दृष्ट्वापराक्रमम् ॥ ००८ ॥

धर्मपाशनिबद्धेन यदि ते मर्षितं पुरा ।
तथैव बद्धमात्मानमबद्धमिव मन्यसे ॥ ००९ ॥

यदि तावद्वने वासो यथोक्तश्चरितस्त्वया ।
तत्त्वं धर्मार्थवित्क्लिष्टः समयं भेत्तुमिच्छसि ॥ ०१० ॥

यदि शक्रः स्वयं पार्थ युध्यते तव कारणात् ।
तथापि न व्यथा काचिन्मम स्याद्विक्रमिष्यतः ॥ ०११ ॥

अयं कौन्तेय कामस्ते नचिरात्समुपस्थितः ।
योत्स्यसे त्वं मया सार्धमद्य द्रक्ष्यसि मे बलम् ॥ ०१२ ॥

अर्जुन उवाच ॥

इदानीमेव तावत्त्वमपयातो रणान्मम ।
तेन जीवसि राधेय निहतस्त्वनुजस्तव ॥ ०१३ ॥

भ्रातरं घातयित्वा च त्यक्त्वा रणशिरश्च कः ।
त्वदन्यः पुरुषः सत्सु ब्रूयादेवं व्यवस्थितः ॥ ०१४ ॥

वैशंपायन उवाच ॥

इति कर्णं ब्रुवन्नेव बीभत्सुरपराजितः ।
अभ्ययाद्विसृजन्बाणान्कायावरणभेदिनः ॥ ०१५ ॥

प्रतिजग्राह तान्कर्णः शरानग्निशिखोपमान् ।
शरवर्षेण महता वर्षमाण इवाम्बुदः ॥ ०१६ ॥

उत्पेतुः शरजालानि घोररूपाणि सर्वशः ।
अविध्यदश्वान्बाह्वोश्च हस्तावापं पृथक्पृथक् ॥ ०१७ ॥

सोऽमृष्यमाणः कर्णस्य निषङ्गस्यावलम्बनम् ।
चिच्छेद निशिताग्रेण शरेण नतपर्वणा ॥ ०१८ ॥

उपासङ्गादुपादाय कर्णो बाणानथापरान् ।
विव्याध पाण्डवं हस्ते तस्य मुष्टिरशीर्यत ॥ ०१९ ॥

ततः पार्थो महाबाहुः कर्णस्य धनुरच्छिनत् ।
स शक्तिं प्राहिणोत्तस्मै तां पार्थो व्यधमच्छरैः ॥ ०२० ॥

ततोऽभिपेतुर्बहवो राधेयस्य पदानुगाः ।
तांश्च गाण्डीवनिर्मुक्तैः प्राहिणोद्यमसादनम् ॥ ०२१ ॥

ततोऽस्याश्वाञ्शरैस्तीक्ष्णैर्बीभत्सुर्भारसाधनैः ।
आकर्णमुक्तैरभ्यघ्नंस्ते हताः प्रापतन्भुवि ॥ ०२२ ॥

अथापरेण बाणेन ज्वलितेन महाभुजः ।
विव्याध कर्णं कौन्तेयस्तीक्ष्णेनोरसि वीर्यवान् ॥ ०२३ ॥

तस्य भित्त्वा तनुत्राणं कायमभ्यपतच्छरः ।
ततः स तमसाविष्टो न स्म किंचित्प्रजज्ञिवान् ॥ ०२४ ॥

स गाढवेदनो हित्वा रणं प्रायादुदङ्मुखः ।
ततोऽर्जुन उपाक्रोशदुत्तरश्च महारथः ॥ ०२५ ॥

# अध्याय ०५६

वैशंपायन उवाच ॥

ततो वैकर्तनं जित्वा पार्थो वैराटिमब्रवीत् ।
एतन्मां प्रापयानीकं यत्र तालो हिरण्मयः ॥ ००१ ॥

अत्र शांतनवो भीष्मो रथेऽस्माकं पितामहः ।
काङ्क्षमाणो मया युद्धं तिष्ठत्यमरदर्शनः ॥ ००२ ॥

आदास्याम्यहमेतस्य धनुर्ज्यामपि चाहवे ॥ ००२ ॥

अस्यन्तं दिव्यमस्त्रं मां चित्रमद्य निशामय ।
शतह्रदामिवायान्तीं स्तनयित्नोरिवाम्बरे ॥ ००३ ॥

सुवर्णपृष्ठं गाण्डीवं द्रक्ष्यन्ति कुरवो मम ।
दक्षिणेनाथ वामेन कतरेण स्विदस्यति ॥ ००४ ॥

इति मां सङ्गताः सर्वे तर्कयिष्यन्ति शत्रवः ॥ ००४ ॥

शोणितोदां रथावर्तां नागनक्रां दुरत्ययाम् ।
नदीं प्रस्यन्दयिष्यामि परलोकप्रवाहिनीम् ॥ ००५ ॥

पाणिपादशिरःपृष्ठबाहुशाखानिरन्तरम् ।
वनं कुरूणां छेत्स्यामि भल्लैः संनतपर्वभिः ॥ ००६ ॥

जयतः कौरवीं सेनामेकस्य मम धन्विनः ।
शतं मार्गा भविष्यन्ति पावकस्येव कानने ॥ ००७ ॥

मया चक्रमिवाविद्धं सैन्यं द्रक्ष्यसि केवलम् ॥ ००७ ॥

असंभ्रान्तो रथे तिष्ठ समेषु विषमेषु च ।
दिवमावृत्य तिष्ठन्तं गिरिं भेत्स्यामि धारिभिः ॥ ००८ ॥

अहमिन्द्रस्य वचनात्सङ्ग्रामेऽभ्यहनं पुरा ।
पौलोमान्कालखञ्जांश्च सहस्राणि शतानि च ॥ ००९ ॥

अहमिन्द्राद्दृढां मुष्टिं ब्रह्मणः कृतहस्तताम् ।
प्रगाढं तुमुलं चित्रमतिविद्धं प्रजापतेः ॥ ०१० ॥

अहं पारे समुद्रस्य हिरण्यपुरमारुजम् ।
जित्वा षष्टिसहस्राणि रथिनामुग्रधन्विनाम् ॥ ०११ ॥

ध्वजवृक्षं पत्तितृणं रथसिंहगणायुतम् ।
वनमादीपयिष्यामि कुरूणामस्त्रतेजसा ॥ ०१२ ॥

तानहं रथनीडेभ्यः शरैः संनतपर्वभिः ।
एकः सङ्कालयिष्यामि वज्रपाणिरिवासुरान् ॥ ०१३ ॥

रौद्रं रुद्रादहं ह्यस्त्रं वारुणं वरुणादपि ।
अस्त्रमाग्नेयमग्नेश्च वायव्यं मातरिश्वनः ॥ ०१४ ॥

वज्रादीनि तथास्त्राणि शक्रादहमवाप्तवान् ॥ ०१४ ॥

धार्तराष्ट्रवनं घोरं नरसिंहाभिरक्षितम् ।
अहमुत्पाटयिष्यामि वैराटे व्येतु ते भयम् ॥ ०१५ ॥

एवमाश्वासितस्तेन वैराटिः सव्यसाचिना ।
व्यगाहत रथानीकं भीमं भीष्मस्य धीमतः ॥ ०१६ ॥

तमायान्तं महाबाहुं जिगीषन्तं रणे परान् ।
अभ्यवारयदव्यग्रः क्रूरकर्मा धनञ्जयम्  ॥ ०१७  ॥

तं चित्रमाल्याभरणाः कृतविद्या मनस्विनः ।
आगच्छन्भीमधन्वानं मौर्वीं पर्यस्य बाहुभिः  ॥ ०१८  ॥

दुःशासनो विकर्णश्च दुःसहोऽथ विविंशतिः ।
आगत्य भीमधन्वानं बीभत्सुं पर्यवारयन्  ॥ ०१९  ॥

दुःशासनस्तु भल्लेन विद्ध्वा वैराटिमुत्तरम् ।
द्वितीयेनार्जुनं वीरः प्रत्यविध्यत्स्तनान्तरे  ॥ ०२०  ॥

तस्य जिष्णुरुपावृत्य पृथुधारेण कार्मुकम् ।
चकर्त गार्ध्रपत्रेण जातरूपपरिष्कृतम्  ॥ ०२१  ॥

अथैनं पञ्चभिः पश्चात्प्रत्यविध्यत्स्तनान्तरे ।
सोऽपयातो रणं हित्वा पार्थबाणप्रपीडितः  ॥ ०२२  ॥

तं विकर्णः शरैस्तीक्ष्णैर्गार्ध्रपत्रैरजिह्मगैः ।
विव्याध परवीरघ्नमर्जुनं धृतराष्ट्रजः  ॥ ०२३  ॥

ततस्तमपि कौन्तेयः शरेणानतपर्वणा ।
ललाटेऽभ्यहनत्तूर्णं स विद्धः प्रापतद्रथात्  ॥ ०२४  ॥

ततः पार्थमभिद्रुत्य दुःसहः सविविंशतिः ।
अवाकिरच्छरैस्तीक्ष्णैः परीप्सन्भ्रातरं रणे  ॥ ०२५  ॥

तावुभौ गार्ध्रपत्राभ्यां निशिताभ्यां धनञ्जयः ।
विद्ध्वा युगपदव्यग्रस्तयोर्वाहानसूदयत्  ॥ ०२६  ॥

तौ हताश्वौ विविद्धाङ्गौ धृतराष्ट्रात्मजावुभौ ।

अभिपत्य रथैरन्यैरपनीतौ पदानुगैः ॥ ०२७ ॥

सर्वा दिशश्चाभ्यपतद्बीभत्सुरपराजितः ।
किरीटमाली कौन्तेयो लब्धलक्षो महाबलः ॥ ०२८ ॥

---

# अध्याय ०५७

वैशंपायन उवाच ॥

अथ सङ्गम्य सर्वे तु कौरवाणां महारथाः ।
अर्जुनं सहिता यत्ताः प्रत्ययुध्यन्त भारत ॥ ००१ ॥

स सायकमयैर्जालैः सर्वतस्तान्महारथान् ।
प्राच्छादयदमेयात्मा नीहार इव पर्वतान् ॥ ००२ ॥

नदद्भिश्च महानागैर्हेषमाणैश्च वाजिभिः ।
भेरीशङ्खनिनादैश्च स शब्दस्तुमुलोऽभवत् ॥ ००३ ॥

नराश्वकायान्निर्भिद्य लोहानि कवचानि च ।
पार्थस्य शरजालानि विनिष्पेतुः सहस्रशः ॥ ००४ ॥

त्वरमाणः शरानस्यन्पाण्डवः स बभौ रणे ।
मध्यंदिनगतोऽर्चिष्माञ्शरदीव दिवाकरः ॥ ००५ ॥

उपप्लवन्त वित्रस्ता रथेभ्यो रथिनस्तदा ।
सादिनश्चाश्वपृष्ठेभ्यो भूमौ चापि पदातयः ॥ ००६ ॥

शरैः संताड्यमानानां कवचानां महात्मनाम् ।

ताम्रराजतलोहानां प्रादुरासीन्महास्वनः ॥ ००७ ॥

छन्नमायोधनं सर्वं शरीरैर्गतचेतसाम् ।
गजाश्वसादिभिस्तत्र शितबाणात्तजीवितैः ॥ ००८ ॥

रथोपस्थाभिपतितैरास्तृता मानवैर्मही ।
प्रनृत्यदिव सङ्ग्रामे चापहस्तो धनञ्जयः ॥ ००९ ॥

श्रुत्वा गाण्डीवनिर्घोषं विस्फूर्जितमिवाशनेः ।
त्रस्तानि सर्वभूतानि व्यगच्छन्त महाहवात् ॥ ०१० ॥

कुण्डलोष्णीषधारीणि जातरूपस्रजानि च ।
पतितानि स्म दृश्यन्ते शिरांसि रणमूर्धनि ॥ ०११ ॥

विशिखोन्मथितैर्गात्रैर्बाहुभिश्च सकार्मुकैः ।
सहस्ताभरणैश्चान्यैः प्रच्छन्ना भाति मेदिनी ॥ ०१२ ॥

शिरसां पात्यमानानामन्तरा निशितैः शरैः ।
अश्मवृष्टिरिवाकाशादभवद्भरतर्षभ ॥ ०१३ ॥

दर्शयित्वा तथात्मानं रौद्रं रुद्रपराक्रमः ।
अवरुद्धश्चरन्पार्थो दशवर्षाणि त्रीणि च ॥ ०१४ ॥

क्रोधाग्निमुत्सृजद्घोरं धार्तराष्ट्रेषु पाण्डवः ॥ ०१४ ॥

तस्य तद्दहतः सैन्यं दृष्ट्वा चैव पराक्रमम् ।
सर्वे शान्तिपरा योधा धार्तराष्ट्रस्य पश्यतः ॥ ०१५ ॥

वित्रासयित्वा तत्सैन्यं द्रावयित्वा महारथान् ।
अर्जुनो जयतां श्रेष्ठः पर्यवर्तत भारत ॥ ०१६ ॥

प्रावर्तयन्नदीं घोरां शोणितौघतरङ्गिणीम् ।
अस्थिशैवलसंबाधां युगान्ते कालनिर्मिताम्  ॥ ०१७  ॥

शरचापप्लवां घोरां मांसशोणितकर्दमाम् ।
महारथमहाद्वीपां शङ्खदुन्दुभिनिस्वनाम्  ॥ ०१८  ॥

चकार महतीं पार्थो नदीमुत्तरशोणिताम्  ॥ ०१८  ॥

आददानस्य हि शरान्संधाय च विमुञ्चतः ।
विकर्षतश्च गाण्डीवं न किञ्चिद्दृश्यतेऽन्तरम्  ॥ ०१९  ॥

---

# अध्याय ०५८

वैशंपायन उवाच  ॥

अथ दुर्योधनः कर्णो दुःशासनविविंशती ।
द्रोणश्च सह पुत्रेण कृपश्चातिरथो रणे  ॥ ००१  ॥

पुनरीयुः सुसंरब्धा धनञ्जयजिघांसया ।
विस्फारयन्तश्चापानि बलवन्ति दृढानि च  ॥ ००२  ॥

तान्प्रकीर्णपताकेन रथेनादित्यवर्चसा ।
प्रत्युद्ययौ महाराज समस्तान्वानरध्वजः  ॥ ००३  ॥

ततः कृपश्च कर्णश्च द्रोणश्च रथिनां वरः ।
तं महास्त्रैर्महावीर्यं परिवार्य धनञ्जयम्  ॥ ००४  ॥

शरौघान्सम्यगस्यन्तो जीमूता इव वार्षिकाः ।

ववर्षुः शरवर्षाणि प्रपतन्तं किरीटिनम्  ॥ ००५  ॥

इषुभिर्बहुभिस्तूर्णं समरे लोमवाहिभिः ।
अदूरात्पर्यवस्थाय पूरयामासुराद्दताः  ॥ ००६  ॥

तथावकीर्णस्य हि तैर्दिव्यैरस्त्रैः समन्ततः ।
न तस्य द्यङ्गुलमपि विवृतं समदृश्यत  ॥ ००७  ॥

ततः प्रहस्य बीभत्सुर्दिव्यमैन्द्रं महारथः ।
अस्त्रमादित्यसङ्काशं गाण्डीवे समयोजयत्  ॥ ००८  ॥

स रश्मिभिरिवादित्यः प्रतपन्समरे बली ।
किरीटमाली कौन्तेयः सर्वान्प्राच्छादयत्कुरून्  ॥ ००९  ॥

यथा बलाहके विद्युत्पावको वा शिलोच्चये ।
तथा गाण्डीवमभवदिन्द्रायुधमिवाततम्  ॥ ०१०  ॥

यथा वर्षति पर्जन्ये विद्युद्विभ्राजते दिवि ।
तथा दश दिशः सर्वाः पतद्गाण्डीवमावृणोत्  ॥ ०११  ॥

त्रस्ताश्च रथिनः सर्वे बभूवुस्तत्र सर्वशः ।
सर्वे शान्तिपरा भूत्वा स्वचित्तानि न लेभिरे  ॥ ०१२  ॥

सङ्ग्रामविमुखाः सर्वे योधास्ते हतचेतसः  ॥ ०१२  ॥

एवं सर्वाणि सैन्यानि भग्नानि भरतर्षभ ।
प्राद्रवन्त दिशः सर्वा निराशानि स्वजीविते  ॥ ०१३  ॥

# अध्याय ०५९

वैशंपायन उवाच ॥

ततः शांतनवो भीष्मो दुराधर्षः प्रतापवान् ।
वध्यमानेषु योधेषु धनञ्जयमुपाद्रवत् ॥ ००१ ॥

प्रगृह्य कार्मुकश्रेष्ठं जातरूपपरिष्कृतम् ।
शरानादाय तीक्ष्णाग्रान्मर्मभेदप्रमाथिनः ॥ ००२ ॥

पाण्डुरेणातपत्रेण ध्रियमाणेन मूर्धनि ।
शुशुभे स नरव्याघ्रो गिरिः सूर्योदये यथा ॥ ००३ ॥

प्रध्माय शङ्खं गाङ्गेयो धार्तराष्ट्रान्प्रहर्षयन् ।
प्रदक्षिणमुपावृत्य बीभत्सुं समवारयत् ॥ ००४ ॥

तमुद्वीक्ष्य तथायान्तं कौन्तेयः परवीरहा ।
प्रत्यगृह्णात्प्रहृष्टात्मा धाराधरमिवाचलः ॥ ००५ ॥

ततो भीष्मः शरानष्टौ ध्वजे पार्थस्य वीर्यवान् ।
समपर्यन्महावेगाञ्श्वसमानानिवोरगान् ॥ ००६ ॥

ते ध्वजं पाण्डुपुत्रस्य समासाद्य पतत्रिणः ।
ज्वलन्तः कपिमाजघ्नुर्ध्वजाग्रनिलयांश्च तान् ॥ ००७ ॥

ततो भल्लेन महता पृथुधारेण पाण्डवः ।
छत्रं चिच्छेद भीष्मस्य तूर्णं तदपतद्भुवि ॥ ००८ ॥

ध्वजं चैवास्य कौन्तेयः शरैरभ्यहनद्दृढम् ।
शीघ्रकृद्रथवाहांश्च तथोभौ पार्ष्णिसारथी ॥ ००९ ॥

तयोस्तदभवद्युद्धं तुमुलं लोमहर्षणम् ।
भीष्मस्य सह पार्थेन बलिवासवयोरिव ॥ ०१० ॥

भल्लैर्भल्लाः समागम्य भीष्मपाण्डवयोर्युधि ।
अन्तरिक्षे व्यराजन्त खद्योताः प्रावृषीव हि ॥ ०११ ॥

अग्निचक्रमिवाविद्धं सव्यदक्षिणमस्यतः ।
गाण्डीवमभवद्राजन्पार्थस्य सृजतः शरान् ॥ ०१२ ॥

स तैः संछादयामास भीष्मं शरशतैः शितैः ।
पर्वतं वारिधाराभिश्छादयन्निव तोयदः ॥ ०१३ ॥

तां स वेलामिवोद्धूतां शरवृष्टिं समुत्थिताम् ।
व्यधमत्सायकैर्भीष्मो अर्जुनं संनिवारयत् ॥ ०१४ ॥

ततस्तानि निकृत्तानि शरजालानि भागशः ।
समरेऽभिव्यशीर्यन्त फल्गुनस्य रथं प्रति ॥ ०१५ ॥

ततः कनकपुङ्खानां शरवृष्टिं समुत्थिताम् ।
पाण्डवस्य रथात्तूर्णं शलभानामिवायतिम् ॥ ०१६ ॥

व्यधमत्तां पुनस्तस्य भीष्मः शरशतैः शितैः ॥ ०१६ ॥

ततस्ते कुरवः सर्वे साधु साध्विति चाब्रुवन् ।
दुष्करं कृतवान्भीष्मो यदर्जुनमयोधयत् ॥ ०१७ ॥

बलवांस्तरुणो दक्षः क्षिप्रकारी च पाण्डवः ।
कोऽन्यः समर्थः पार्थस्य वेगं धारयितुं रणे ॥ ०१८ ॥

ऋते शांतनवाद्भीष्मात्कृष्णाद्वा देवकीसुतात् ।
आचार्यप्रवराद्वापि भारद्वाजान्महाबलात् ॥ ०१९ ॥

अस्त्रैरस्त्राणि संवार्य क्रीडतः पुरुषर्षभौ ।
चक्षूंषि सर्वभूतानां मोहयन्तौ महाबलौ ॥ ०२० ॥

प्राजापत्यं तथैवैन्द्रमाग्नेयं च सुदारुणम् ।
कौबेरं वारुणं चैव याम्यं वायव्यमेव च ॥ ०२१ ॥

प्रयुञ्जानौ महात्मानौ समरे तौ विचेरतुः ॥ ०२१ ॥

विस्मितान्यथ भूतानि तौ दृष्ट्वा संयुगे तदा ।
साधु पार्थ महाबाहो साधु भीष्मेति चाब्रुवन् ॥ ०२२ ॥

नेदं युक्तं मनुष्येषु योऽयं संदृश्यते महान् ।
महास्त्राणां संप्रयोगः समरे भीष्मपार्थयोः ॥ ०२३ ॥

एवं सर्वास्त्रविदुषोरस्त्रयुद्धमवर्तत ।
अथ जिष्णुरुपावृत्य पृथुधारेण कार्मुकम् ॥ ०२४ ॥

चकर्त भीष्मस्य तदा जातरूपपरिष्कृतम् ॥ ०२४ ॥

निमेषान्तरमात्रेण भीष्मोऽन्यत्कार्मुकं रणे ।
समादाय महाबाहुः सज्यं चक्रे महाबलः ॥ ०२५ ॥

शरांश्च सुबहून्क्रुद्धो मुमोचाशु धनञ्जये ॥ ०२५ ॥

अर्जुनोऽपि शरांश्चित्रान्भीष्माय निशितान्बहून् ।
चिक्षेप सुमहातेजास्तथा भीष्मश्च पाण्डवे ॥ ०२६ ॥

तयोर्दिव्यास्त्रविदुषोरस्यतोरनिशं शरान् ।
न विशेषस्तदा राज.ण्लक्ष्यते स्म महात्मनोः ॥ ०२७ ॥

अथावृणोद्दश दिशः शरैरतिरथस्तदा ।
किरीटमाली कौन्तेयः शूरः शांतनवस्तथा ॥ ०२८ ॥

अतीव पाण्डवो भीष्मं भीष्मश्चातीव पाण्डवम् ।
बभूव तस्मिन्सङ्ग्रामे राज.ण्ल्लोके तदद्भुतम् ॥ ०२९ ॥

पाण्डवेन हताः शूरा भीष्मस्य रथरक्षिणः ।
शेरते स्म तदा राजन्कौन्तेयस्याभितो रथम् ॥ ०३० ॥

ततो गाण्डीवनिर्मुक्ता निरमित्रं चिकीर्षवः ।
आगच्छन्पुङ्खसंश्लिष्टाः श्वेतवाहनपत्रिणः ॥ ०३१ ॥

निष्पतन्तो रथात्तस्य धौता हैरण्यवाससः ।
आकाशे समदृश्यन्त हंसानामिव पङ्क्तयः ॥ ०३२ ॥

तस्य तद्दिव्यमस्त्रं हि प्रगाढं चित्रमस्यतः ।
प्रेक्षन्ते स्मान्तरिक्षस्थाः सर्वे देवाः सवासवाः ॥ ०३३ ॥

तद्दृष्ट्वा परमप्रीतो गन्धर्वश्चित्रमद्भुतम् ।
शशंस देवराजाय चित्रसेनः प्रतापवान् ॥ ०३४ ॥

पश्येमानरिनिर्दारान्संसक्तानिव गच्छतः ।
चित्ररूपमिदं जिष्णोर्दिव्यमस्त्रमुदीर्यतः ॥ ०३५ ॥

नेदं मनुष्याः श्रद्दध्युर्न हीदं तेषु विद्यते ।
पौराणानां महास्त्राणां विचित्रोऽयं समागमः ॥ ०३६ ॥

मध्यंदिनगतं सूर्यं प्रतपन्तमिवाम्बरे ।
न शक्नुवन्ति सैन्यानि पाण्डवं प्रतिवीक्षितुम् ॥ ०३७ ॥

उभौ विश्रुतकर्माणावुभौ युद्धविशारदौ ।

उभौ सदृशकर्माणावुभौ युधि दुरासदौ ॥ ०३८ ॥

इत्युक्तो देवराजस्तु पार्थभीष्मसमागमम् ।
पूजयामास दिव्येन पुष्पवर्षेण भारत ॥ ०३९ ॥

ततो भीष्मः शांतनवो वामे पार्श्वे समर्पयत् ।
अस्यतः प्रतिसंधाय विवृतं सव्यसाचिनः ॥ ०४० ॥

ततः प्रहस्य बीभत्सुः पृथुधारेण कार्मुकम् ।
न्यकृन्तद्गार्ध्रपत्रेण भीष्मस्यामिततेजसः ॥ ०४१ ॥

अथैनं दशभिर्बाणैः प्रत्यविध्यत्स्तनान्तरे ।
यतमानं पराक्रान्तं कुन्तीपुत्रो धनञ्जयः ॥ ०४२ ॥

स पीडितो महाबाहुर्गृहीत्वा रथकूबरम् ।
गाङ्गेयो युधि दुर्धर्षस्तस्थौ दीर्घमिवातुरः ॥ ०४३ ॥

तं विसञ्ज्ञमपोवाह संयन्ता रथवाजिनाम् ।
उपदेशमनुस्मृत्य रक्षमाणो महारथम् ॥ ०४४ ॥

---

# अध्याय ०६०

वैशंपायन उवाच ॥

भीष्मे तु सङ्ग्रामशिरो विहाय ; पलायमाने धृतराष्ट्रपुत्रः ।
उच्छ्रित्य केतुं विनदन्महात्मा ; स्वयं विगृह्यार्जुनमाससाद ॥ ००१ ॥

स भीमधन्वानमुदग्रवीर्यं ; धनञ्जयं शत्रुगणे चरन्तम् ।
आकर्णपूर्णायतचोदितेन ; भल्लेन विव्याध ललाटमध्ये ॥ ००२ ॥

स तेन बाणेन समर्पितेन ; जाम्बूनदाभेन सुसंशितेन ।
रराज राजन्महनीयकर्मा ; यथैकपर्वा रुचिरैकशृङ्गः ॥ ००३ ॥

अथास्य बाणेन विदारितस्य ; प्रादुर्बभूवासृगजस्रमुष्णम् ।
सा तस्य जाम्बूनदपुष्पचित्रा ; मालेव चित्राभिविराजते स्म ॥ ००४ ॥

स तेन बाणाभिहतस्तरस्वी ; दुर्योधनेनोद्धतमन्युवेगः ।
शरानुपादाय विषाग्निकल्पा ;न्विव्याध राजानमदीनसत्त्वः ॥ ००५ ॥

दुर्योधनश्चापि तमुग्रतेजाः ; पार्थश्च दुर्योधनमेकवीरः ।
अन्योन्यमाजौ पुरुषप्रवीरौ ; समं समाजघ्नतुराजमीढौ ॥ ००६ ॥

ततः प्रभिन्नेन महागजेन ; महीधराभेन पुनर्विकर्णः ।
रथैश्चतुर्भिर्गजपादरक्षैः ; कुन्तीसुतं जिष्णुमथाभ्यधावत् ॥ ००७ ॥

तमापतन्तं त्वरितं गजेन्द्रं ; धनञ्जयः कुम्भविभागमध्ये ।
आकर्णपूर्णेन दृढायसेन ; बाणेन विव्याध महाजवेन ॥ ००८ ॥

पार्थेन सृष्टः स तु गार्ध्रपत्र ; आ पुङ्खदेशात्प्रविवेश नागम् ।
विदार्य शैलप्रवरप्रकाशं ; यथाशनिः पर्वतमिन्द्रसृष्टः ॥ ००९ ॥

शरप्रतप्तः स तु नागराजः ; प्रवेपिताङ्गो व्यथितान्तरात्मा ।
संसीदमानो निपपात मह्यां ; वज्राहतं शृङ्गमिवाचलस्य ॥ ०१० ॥

निपातिते दन्तिवरे पृथिव्यां ; त्रासाद्विकर्णः सहसावतीर्य ।
तूर्णं पदान्यष्टशतानि गत्वा ; विविंशतेः स्यन्दनमारुरोह ॥ ०११ ॥

निहत्य नागं तु शरेण तेन ; वज्रोपमेनाद्रिवराम्बुदाभम् ।

तथाविधेनैव शरेण पार्थो ; दुर्योधनं वक्षसि निर्बिभेद ॥ ०१२ ॥

ततो गजे राजनि चैव भिन्ने ; भग्ने विकर्णे च सपादरक्षे ।
गाण्डीवमुक्तैर्विशिखैः प्रणुन्ना ;स्ते योधमुख्याः सहसापजग्मुः ॥ ०१३ ॥

दृष्ट्वैव बाणेन हतं तु नागं ; योधांश्च सर्वान्द्रवतो निशम्य ।
रथं समावृत्य कुरुप्रवीरो ; रणात्प्रदुद्राव यतो न पार्थः ॥ ०१४ ॥

तं भीमरूपं त्वरितं द्रवन्तं ; दुर्योधनं शत्रुसहो निषङ्गी ।
प्राक्ष्वेडयद्योद्धुमनाः किरीटी ; बाणेन विद्धं रुधिरं वमन्तम् ॥ ०१५ ॥

अर्जुन उवाच ॥

विहाय कीर्तिं विपुलं यशश्च ; युद्धात्परावृत्य पलायसे किम् ।
न तेऽद्य तूर्याणि समाहतानि ; यथावदुद्यान्ति गतस्य युद्धे ॥ ०१६ ॥

युधिष्ठिरस्यास्मि निदेशकारी ; पार्थस्तृतीयो युधि च स्थिरोऽस्मि ।
तदर्थमावृत्य मुखं प्रयच्छ ; नरेन्द्रवृत्तं स्मर धार्तराष्ट्र ॥ ०१७ ॥

मोघं तवेदं भुवि नामधेयं ; दुर्योधनेतीह कृतं पुरस्तात् ।
न हीह दुर्योधनता तवास्ति ; पलायमानस्य रणं विहाय ॥ ०१८ ॥

न ते पुरस्तादथ पृष्ठतो वा ; पश्यामि दुर्योधन रक्षितारम् ।
परैहि युद्धेन कुरुप्रवीर ; प्राणान्प्रियान्पाण्डवतोऽद्य रक्ष ॥ ०१९ ॥

# अध्याय ०६१

वैशंपायन उवाच ॥

आहूयमानस्तु स तेन संख्ये ; महामना धृतराष्ट्रस्य पुत्रः ।
निवर्तितस्तस्य गिराङ्कुशेन ; गजो यथा मत्त इवाङ्कुशेन ॥ ००१ ॥

सोऽमृष्यमाणो वचसाभिमृष्टो ; महारथेनातिरथस्तरस्वी ।
पर्याववर्ताथ रथेन वीरो ; भोगी यथा पादतलाभिमृष्टः ॥ ००२ ॥

तं प्रेक्ष्य कर्णः परिवर्तमानं ; निवर्त्य संस्तभ्य च विद्धगात्रः ।
दुर्योधनं दक्षिणतोऽभ्यगच्छ ;त्पार्थं नृवीरो युधि हेममाली ॥ ००३ ॥

भीष्मस्ततः शांतनवो निवृत्य ; हिरण्यकक्ष्यांस्त्वरयंस्तुरङ्गान् ।
दुर्योधनं पश्चिमतोऽभ्यरक्ष ;त्पार्थान्महाबाहुरधिज्यधन्वा ॥ ००४ ॥

द्रोणः कृपश्चैव विविंशतिश्च ; दुःशासनश्चैव निवृत्य शीघ्रम् ।
सर्वे पुरस्ताद्वितितेषुचापा ; दुर्योधनार्थं त्वरिताभ्युपेयुः ॥ ००५ ॥

स तान्यनीकानि निवर्तमाना ;न्यालोक्य पूर्णौघनिभानि पार्थः ।
हंसो यथा मेघमिवापतन्तं ; धनञ्जयः प्रत्यपतत्तरस्वी ॥ ००६ ॥

ते सर्वतः संपरिवार्य पार्थ ;मस्त्राणि दिव्यानि समाददानाः ।
ववर्षुरभ्येत्य शरैः समन्ता ;न्मेघा यथा भूधरमम्बुवेगैः ॥ ००७ ॥

ततोऽस्त्रमस्त्रेण निवार्य तेषां ; गाण्डीवधन्वा कुरुपुङ्गवानाम् ।
संमोहनं शत्रुसहोऽन्यदस्त्रं ; प्रादुश्चकारैन्द्रिरपारणीयम् ॥ ००८ ॥

ततो दिशश्चानुदिशो विवृत्य ; शरैः सुधारैर्निशितैः सुपुङ्खैः ।
गाण्डीवघोषेण मनांसि तेषां ; महाबलः प्रव्यथयां चकार ॥ ००९ ॥

ततः पुनर्भीमरवं प्रगृह्य ; दोर्भ्यां महाशङ्खमुदारघोषम् ।
व्यनादयत्स प्रदिशो दिशः खं ; भुवं च पार्थो द्विषतां निहन्ता ॥ ०१० ॥

ते शङ्खनादेन कुरुप्रवीराः ; संमोहिताः पार्थसमीरितेन ।
उत्सृज्य चापानि दुरासदानि ; सर्वे तदा शान्तिपरा बभूवुः ॥ ०११ ॥

तथा विसञ्ज्ञेषु परेषु पार्थः ; स्मृत्वा तु वाक्यानि तथोत्तरायाः ।
निर्याहि मध्यादिति मत्स्यपुत्र ;मुवाच यावत्कुरवो विसञ्ज्ञाः ॥ ०१२ ॥

आचार्य शारद्वतयोः सुशुक्ले ; कर्णस्य पीतं रुचिरं च वस्त्रम् ।
द्रौणेश्च राज्ञश्च तथैव नीले ; वस्त्रे समादत्स्व नरप्रवीर ॥ ०१३ ॥

भीष्मस्य सञ्ज्ञां तु तथैव मन्ये ; जानाति मेऽस्त्रप्रतिघातमेषः ।
एतस्य वाहान्कुरु सव्यतस्त्व ;मेवं हि यातव्यममूढसञ्ज्ञैः ॥ ०१४ ॥

रश्मीन्समुत्सृज्य ततो महात्मा ; रथादवप्लुत्य विराटपुत्रः ।
वस्त्राण्युपादाय महारथानां ; तूर्णं पुनः स्वं रथमारुरोह ॥ ०१५ ॥

ततोऽन्वशासच्चतुरः सदश्वा ;न्पुत्रो विराटस्य हिरण्यकक्ष्यान् ।
ते तद्व्यतीयुर्ध्वजिनामनीकं ; श्वेता वहन्तोऽर्जुनमाजिमध्यात् ॥ ०१६ ॥

तथा तु यान्तं पुरुषप्रवीरं ; भीष्मः शरैरभ्यहनत्तरस्वी ।
स चापि भीष्मस्य हयान्निहत्य ; विव्याध पार्श्वे दशभिः पृषत्कैः ॥ ०१७ ॥

ततोऽर्जुनो भीष्ममपास्य युद्धे ; विद्धास्य यन्तारमरिष्टधन्वा ।
तस्थौ विमुक्तो रथवृन्दमध्या ;द्राहुं विदार्येव सहस्ररश्मिः ॥ ०१८ ॥

लब्ध्वा तु सञ्ज्ञां च कुरुप्रवीरः ; पार्थं समीक्ष्याथ महेन्द्रकल्पम् ।
रणाद्विमुक्तं स्थितमेकमाजौ ; स धार्तराष्ट्रस्त्वरितो बभाषे ॥ ०१९ ॥

अयं कथं स्विद्भवतां विमुक्त ;स्तं वै प्रबध्नीत यथा न मुच्येत् ।
तमब्रवीच्छांतनवः प्रहस्य ; क्व ते गता बुद्धिरभूत्क्व वीर्यम् ॥ ०२० ॥

शान्तिं पराश्वस्य यथा स्थितोऽभू ;रुत्सृज्य बाणांश्च धनुश्च चित्रम् ।
न त्वेव बीभत्सुरलं नृशंसं ; कर्तुं न पापेऽस्य मनो निविष्टम् ॥ ०२१ ॥

त्रैलोक्यहेतोर्न जहेत्स्वधर्मं ; तस्मान्न सर्वे निहता रणेऽस्मिन् ।
क्षिप्रं कुरून्याहि कुरुप्रवीर ; विजित्य गाश्च प्रतियातु पार्थः ॥ ०२२ ॥

दुर्योधनस्तस्य तु तन्निशम्य ; पितामहस्यात्महितं वचोऽथ ।
अतीतकामो युधि सोऽत्यमर्षी ; राजा विनिःश्वस्य बभूव तूष्णीम् ॥ ०२३ ॥

तद्भीष्मवाक्यं हितमीक्ष्य सर्वे ; धनञ्जयाग्निं च विवर्धमानम् ।
निवर्तनायैव मनो निदध्यु ;र्दुर्योधनं ते परिरक्षमाणाः ॥ ०२४ ॥

तान्प्रस्थितान्प्रीतमनाः स पार्थो ; धनञ्जयः प्रेक्ष्य कुरुप्रवीरान् ।
आभाषमाणोऽनुययौ मुहूर्तं ; संपूजयंस्तत्र गुरून्महात्मा ॥ ०२५ ॥

पितामहं शांतनवं स वृद्धं ; द्रोणं गुरुं च प्रतिपूज्य मूर्ध्ना ।
द्रौणिं कृपं चैव गुरूंश्च सर्वा ;ञ्शरैर्विचित्रैरभिवाद्य चैव ॥ ०२६ ॥

दुर्योधनस्योत्तमरत्नचित्रं ; चिच्छेद पार्थो मुकुटं शरेण ।
आमन्त्र्य वीरांश्च तथैव मान्या ;न्गाण्डीवघोषेण विनाद्य लोकान् ॥ ०२७ ॥

स देवदत्तं सहसा विनाद्य ; विदार्य वीरो द्विषतां मनांसि ।
ध्वजेन सर्वानभिभूय शत्रू ;न्स हेमजालेन विराजमानः ॥ ०२८ ॥

दृष्ट्वा प्रयातांस्तु कुरून्किरीटी ; हृष्टोऽब्रवीत्तत्र स मत्स्यपुत्रम् ।
आवर्तयाश्वान्पशवो जितास्ते ; याताः परे याहि पुरं प्रहृष्टः ॥ ०२९ ॥

# अध्याय ०६२

वैशंपायन उवाच ॥

ततो विजित्य सङ्ग्रामे कुरून्गोवृषभेक्षणः ।
समानयामास तदा विराटस्य धनं महत् ॥ ००१ ॥

गतेषु च प्रभग्नेषु धार्तराष्ट्रेषु सर्वशः ।
वनान्निष्क्रम्य गहनाद्बहवः कुरुसैनिकाः ॥ ००२ ॥

भयात्संत्रस्तमनसः समाजग्मुस्ततस्ततः ।
मुक्तकेशा व्यदृश्यन्त स्थिताः प्राञ्जलयस्तदा ॥ ००३ ॥

क्षुत्पिपासापरिश्रान्ता विदेशस्था विचेतसः ।
ऊचुः प्रणम्य संभ्रान्ताः पार्थ किं करवाम ते ॥ ००४ ॥

अर्जुन उवाच ॥

स्वस्ति व्रजत भद्रं वो न भेतव्यं कथञ्चन ।
नाहमार्ताञ्जिघांसामि भृशमाश्वासयामि वः ॥ ००५ ॥

वैशंपायन उवाच ॥

तस्य तामभयां वाचं श्रुत्वा योधाः समागताः ।
आयुःकीर्तियशोदाभिस्तमाशिर्भिरनन्दयन् ॥ ००६ ॥

ततो निवृत्ताः कुरवः प्रभग्ना वशमास्थिताः ।
पन्थानमुपसङ्गम्य फल्गुनो वाक्यमब्रवीत् ॥ ००७ ॥

राजपुत्र प्रत्यवेक्ष समानीतानि सर्वशः ।
गोकुलानि महाबाहो वीर गोपालकैः सह ॥ ००८ ॥

ततोऽपराह्णे यास्यामो विराटनगरं प्रति ।
आश्वास्य पाययित्वा च परिप्लाव्य च वाजिनः ॥ ००९ ॥

गच्छन्तु त्वरिताश्चैव गोपालाः प्रेषितास्त्वया ।
नगरे प्रियमाख्यातुं घोषयन्तु च ते जयम् ॥ ०१० ॥

वैशंपायन उवाच ॥

उत्तरस्त्वरमाणोऽथ दूतानाज्ञापयत्ततः ।
वचनादर्जुनस्यैव आचक्षध्वं जयं मम ॥ ०११ ॥

---

# वैवाहिकपर्व

## अध्याय ०६३

वैशंपायन उवाच ॥

अवजित्य धनं चापि विराटो वाहिनीपतिः ।
प्राविशन्नगरं हृष्टश्चतुर्भिः सह पाण्डवैः ॥ ००१ ॥

जित्वा त्रिगर्तान्सङ्ग्रामे गाश्चैवादाय केवलाः ।
अशोभत महाराजः सह पार्थैः श्रिया वृतः ॥ ००२ ॥

तमासनगतं वीरं सुहृदां प्रीतिवर्धनम् ।

उपतस्थुः प्रकृतयः समस्ता ब्राह्मणैः सह ॥ ००३ ॥

सभाजितः ससैन्यस्तु प्रतिनन्द्याथ मत्स्यराट् ।
विसर्जयामास तदा द्विजांश्च प्रकृतीस्तथा ॥ ००४ ॥

ततः स राजा मत्स्यानां विराटो वाहिनीपतिः ।
उत्तरं परिपप्रच्छ क्व यात इति चाब्रवीत् ॥ ००५ ॥

आचख्युस्तस्य संहृष्टाः स्त्रियः कन्याश्च वेश्मनि ।
अन्तःपुरचराश्चैव कुरुभिर्गोधनं हृतम् ॥ ००६ ॥

विजेतुमभिसंरब्ध एक एवातिसाहसात् ।
बृहन्नडासहायश्च निर्यातः पृथिवीञ्जयः ॥ ००७ ॥

उपयातानतिरथान्द्रोणं शांतनवं कृपम् ।
कर्णं दुर्योधनं चैव द्रोणपुत्रं च षड्रथान् ॥ ००८ ॥

राजा विराटोऽथ भृशं प्रतप्तः ; श्रुत्वा सुतं ह्येकरथेन यातम् ।
बृहन्नडासारथिमाजिवर्धनं ; प्रोवाच सर्वानथ मन्त्रिमुख्यान् ॥ ००९ ॥

सर्वथा कुरवस्ते हि ये चान्ये वसुधाधिपाः ।
त्रिगर्तान्निर्जिताञ्श्रुत्वा न स्थास्यन्ति कदाचन ॥ ०१० ॥

तस्माद्गच्छन्तु मे योधा बलेन महता वृताः ।
उत्तरस्य परीप्सार्थं ये त्रिगर्तैरविक्षताः ॥ ०११ ॥

हयांश्च नागांश्च रथांश्च शीघ्रं ; पदातिसंघांश्च ततः प्रवीरान् ।
प्रस्थापयामास सुतस्य हेतो ;र्विचित्रशस्त्राभरणोपपन्नान् ॥ ०१२ ॥

एवं स राजा मत्स्यानां विराटोऽक्षौहिणीपतिः ।
व्यादिदेशाथ तां क्षिप्रं वाहिनीं चतुरङ्गिणीम् ॥ ०१३ ॥

कुमारमाशु जानीत यदि जीवति वा न वा ।
यस्य यन्ता गतः षण्ढो मन्येऽहं न स जीवति ॥ ०१४ ॥

तमब्रवीद्धर्मराजः प्रहस्य ; विराटमार्तं कुरुभिः प्रतप्तम् ।
बृहन्नडा सारथिश्चेन्नरेन्द्र ; परे न नेष्यन्ति तवाद्य गास्ताः ॥ ०१५ ॥

सर्वान्महीपान्सहितान्कुरूंश्च ; तथैव देवासुरयक्षनागान् ।
अलं विजेतुं समरे सुतस्ते ; स्वनुष्ठितः सारथिना हि तेन ॥ ०१६ ॥

अथोत्तरेण प्रहिता दूतास्ते शीघ्रगामिनः ।
विराटनगरं प्राप्य जयमावेदयंस्तदा ॥ ०१७ ॥

राज्ञस्ततः समाचख्यौ मन्त्री विजयमुत्तमम् ।
पराजयं कुरूणां चाप्युपायान्तं तथोत्तरम् ॥ ०१८ ॥

सर्वा विनिर्जिता गावः कुरवश्च पराजिताः ।
उत्तरः सह सूतेन कुशली च परंतप ॥ ०१९ ॥

कङ्क उवाच ॥

दिष्ट्या ते निर्जिता गावः कुरवश्च पराजिताः ।
दिष्ट्या ते जीवितः पुत्रः श्रूयते पार्थिवर्षभ ॥ ०२० ॥

नाद्भुतं त्वेव मन्येऽहं यत्ते पुत्रोऽजयत्कुरून् ।
ध्रुव एव जयस्तस्य यस्य यन्ता बृहन्नडा ॥ ०२१ ॥

वैशंपायन उवाच ॥

ततो विराटो नृपतिः संप्रहृष्टतनूरुहः ।
श्रुत्वा तु विजयं तस्य कुमारस्यामितौजसः ॥ ०२२ ॥

आच्छादयित्वा दूतांस्तान्मन्त्रिणः सोऽभ्यचोदयत् ॥ ०२२ ॥

राजमार्गाः क्रियन्तां मे पताकाभिरलङ्कृताः ।
पुष्पोपहारैरर्च्यन्तां देवताश्चापि सर्वशः ॥ ०२३ ॥

कुमारा योधमुख्याश्च गणिकाश्च स्वलङ्कृताः ।
वादित्राणि च सर्वाणि प्रत्युद्यान्तु सुतं मम ॥ ०२४ ॥

घण्टापणवकः शीघ्रं मत्तमारुह्य वारणम् ।
शृङ्गाटकेषु सर्वेषु आख्यातु विजयं मम ॥ ०२५ ॥

उत्तरा च कुमारीभिर्बह्वीभिरभिसंवृता ।
शृङ्गारवेषाभरणा प्रत्युद्यातु बृहन्नडाम् ॥ ०२६ ॥

श्रुत्वा तु तद्वचनं पार्थिवस्य ; सर्वे पुनः स्वस्तिकपाणयश्च ।
भेर्यश्च तूर्याणि च वारिजाश्च ; वेषैः परार्ध्यैः प्रमदाः शुभाश्च ॥ ०२७ ॥

तथैव सूताः सह मागधैश्च ; नन्दीवाद्याः पणवास्तूर्यवाद्याः ।
पुराद्विराटस्य महाबलस्य ; प्रत्युद्ययुः पुत्रमनन्तवीर्यम् ॥ ०२८ ॥

प्रस्थाप्य सेनां कन्याश्च गणिकाश्च स्वलङ्कृताः ।
मत्स्यराजो महाप्राज्ञः प्रहृष्ट इदमब्रवीत् ॥ ०२९ ॥

अक्षानाहर सैरन्ध्रि कङ्क द्यूतं प्रवर्तताम् ॥ ०२९ ॥

तं तथा वादिनं दृष्ट्वा पाण्डवः प्रत्यभाषत ।
न देवितव्यं हृष्टेन कितवेनेति नः श्रुतम् ॥ ०३० ॥

न त्वामद्य मुदा युक्तमहं देवितुमुत्सहे ।
प्रियं तु ते चिकीर्षामि वर्ततां यदि मन्यसे ॥ ०३१ ॥

विराट उवाच ॥

स्त्रियो गावो हिरण्यं च यच्चान्यद्वसु किञ्चन ।
न मे किञ्चित्त्वया रक्ष्यमन्तरेणापि देवितुम् ॥ ०३२ ॥

कङ्क उवाच ॥

किं ते द्यूतेन राजेन्द्र बहुदोषेण मानद ।
देवने बहवो दोषास्तस्मात्तत्परिवर्जयेत् ॥ ०३३ ॥

श्रुतस्ते यदि वा दृष्टः पाण्डवो वै युधिष्ठिरः ।
स राज्यं सुमहत्स्फीतं भ्रातॄंश्च त्रिदशोपमान् ॥ ०३४ ॥

द्यूते हारितवान्सर्वं तस्माद्द्यूतं न रोचये ।
अथ वा मन्यसे राजन्दीव्याव यदि रोचते ॥ ०३५ ॥

वैशंपायन उवाच ॥

प्रवर्तमाने द्यूते तु मत्स्यः पाण्डवमब्रवीत् ।
पश्य पुत्रेण मे युद्धे तादृशाः कुरवो जिताः ॥ ०३६ ॥

ततोऽब्रवीन्मत्स्यराजं धर्मपुत्रो युधिष्ठिरः ।
बृहन्नडा यस्य यन्ता कथं स न विजेष्यति ॥ ०३७ ॥

इत्युक्तः कुपितो राजा मत्स्यः पाण्डवमब्रवीत् ।
समं पुत्रेण मे षण्ढं ब्रह्मबन्धो प्रशंससि ॥ ०३८ ॥

वाच्यावाच्यं न जानीषे नूनं मामवमन्यसे ।
भीष्मद्रोणमुखान्सर्वान्कस्मान्न स विजेष्यति ॥ ०३९ ॥

वयस्यत्वात्तु ते ब्रह्मन्नपराधमिमं क्षमे ।
नेदृशं ते पुनर्वाच्यं यदि जीवितुमिच्छसि ॥ ०४० ॥

युधिष्ठिर उवाच ॥

यत्र द्रोणस्तथा भीष्मो द्रौणिर्वैकर्तनः कृपः ।
दुर्योधनश्च राजेन्द्र तथान्ये च महारथाः ॥ ०४१ ॥

मरुद्गणैः परिवृतः साक्षादपि शतक्रतुः ।
कोऽन्यो बृहन्नडायास्तान्प्रतियुध्येत सङ्गतान् ॥ ०४२ ॥

विराट उवाच ॥

बहुशः प्रतिषिद्धोऽसि न च वाचं नियच्छसि ।
नियन्ता चेन्न विद्येत न कश्चिद्धर्ममाचरेत् ॥ ०४३ ॥

वैशंपायन उवाच ॥

ततः प्रकुपितो राजा तमक्षेणाहनद्भृशम् ।
मुखे युधिष्ठिरं कोपान्नैवमित्येव भर्त्सयन् ॥ ०४४ ॥

बलवत्प्रतिविद्धस्य नस्तः शोणितमागमत् ।
तदप्राप्तं महीं पार्थः पाणिभ्यां प्रत्यगृह्णत ॥ ०४५ ॥

अवैक्षत च धर्मात्मा द्रौपदीं पार्श्वतः स्थिताम् ।
सा वेद तमभिप्रायं भर्तुश्चित्तवशानुगा ॥ ०४६ ॥

पूरयित्वा च सौवर्णं पात्रं कांस्यमनिन्दिता ।
तच्छोणितं प्रत्यगृह्णाद्यत्प्रसुस्राव पाण्डवात् ॥ ०४७ ॥

अथोत्तरः शुभैर्गन्धैर्माल्यैश्च विविधैस्तथा ।

अवकीर्यमाणः संहृष्टो नगरं स्वैरमागमत् ॥ ०४८ ॥

सभाज्यमानः पौरैश्च स्त्रीभिर्जानपदैस्तथा ।
आसाद्य भवनद्वारं पित्रे स प्रत्यहारयत् ॥ ०४९ ॥

ततो द्वाःस्थः प्रविश्यैव विराटमिदमब्रवीत् ।
बृहन्नडासहायस्ते पुत्रो द्वार्युत्तरः स्थितः ॥ ०५० ॥

ततो हृष्टो मत्स्यराजः क्षत्तारमिदमब्रवीत् ।
प्रवेश्यतामुभौ तूर्णं दर्शनेप्सुरहं तयोः ॥ ०५१ ॥

क्षत्तारं कुरुराजस्तु शनैः कर्ण उपाजपत् ।
उत्तरः प्रविशत्वेको न प्रवेश्या बृहन्नडा ॥ ०५२ ॥

एतस्य हि महाबाहो व्रतमेतत्समाहितम् ।
यो ममाङ्गे व्रणं कुर्याच्छोणितं वापि दर्शयेत् ॥ ०५३ ॥

अन्यत्र सङ्ग्रामगतान्न स जीवेदसंशयम् ॥ ०५३ ॥

न मृष्याद्भृशसङ्क्रुद्धो मां दृष्ट्वैव सशोणितम् ।
विराटमिह सामात्यं हन्यात्सबलवाहनम् ॥ ०५४ ॥

---

# अध्याय ०६४

वैशंपायन उवाच ॥

ततो राज्ञः सुतो ज्येष्ठः प्राविशत्पृथिवीञ्जयः ।
सोऽभिवाद्य पितुः पादौ धर्मराजमपश्यत ॥ ००१ ॥

स तं रुधिरसंसिक्तमनेकाग्रमनागसम् ।
भूमावासीनमेकान्ते सैरन्ध्र्या समुपस्थितम् ॥ ००२ ॥

ततः पप्रच्छ पितरं त्वरमाण इवोत्तरः ।
केनायं ताडितो राजन्केन पापमिदं कृतम् ॥ ००३ ॥

विराट उवाच ॥

मयायं ताडितो जिह्मो न चाप्येतावदर्हति ।
प्रशस्यमाने यः शूरे त्वयि षण्ढं प्रशंसति ॥ ००४ ॥

उत्तर उवाच ॥

अकार्यं ते कृतं राजन्क्षिप्रमेव प्रसाद्यताम् ।
मा त्वा ब्रह्मविषं घोरं समूलमपि निर्दहेत् ॥ ००५ ॥

वैशंपायन उवाच ॥

स पुत्रस्य वचः श्रुत्वा विराटो राष्ट्रवर्धनः ।
क्षमयामास कौन्तेयं भस्मच्छन्नमिवानलम् ॥ ००६ ॥

क्षमयन्तं तु राजानं पाण्डवः प्रत्यभाषत ।
चिरं क्षान्तमिदं राजन्न मन्युर्विद्यते मम ॥ ००७ ॥

यदि ह्येतत्पतेद्भूमौ रुधिरं मम नस्ततः ।
सराष्ट्रस्त्वं महाराज विनश्येथा न संशयः ॥ ००८ ॥

न दूषयामि ते राजन्यच्च हन्याददूषकम् ।
बलवन्तं महाराज क्षिप्रं दारुणमाप्नुयात् ॥ ००९ ॥

शोणिते तु व्यतिक्रान्ते प्रविवेश बृहन्नडा ।
अभिवाद्य विराटं च कङ्कं चाप्युपतिष्ठत ॥ ०१० ॥

क्षमयित्वा तु कौरव्यं रणादुत्तरमागतम् ।
प्रशशंस ततो मत्स्यः शृण्वतः सव्यसाचिनः ॥ ०११ ॥

त्वया दायादवानस्मि कैकेयीनन्दिवर्धन ।
त्वया मे सदृशः पुत्रो न भूतो न भविष्यति ॥ ०१२ ॥

पदं पदसहस्रेण यश्चरन्नापराध्नुयात् ।
तेन कर्णेन ते तात कथमासीत्समागमः ॥ ०१३ ॥

मनुष्यलोके सकले यस्य तुल्यो न विद्यते ।
यः समुद्र इवाक्षोभ्यः कालाग्निरिव दुःसहः ॥ ०१४ ॥

तेन भीष्मेण ते तात कथमासीत्समागमः ॥ ०१४ ॥

आचार्यो वृष्णिवीराणां पाण्डवानां च यो द्विजः ।
सर्वक्षत्रस्य चाचार्यः सर्वशस्त्रभृतां वरः ॥ ०१५ ॥

तेन द्रोणेन ते तात कथमासीत्समागमः ॥ ०१५ ॥

आचार्यपुत्रो यः शूरः सर्वशस्त्रभृतामपि ।
अश्वत्थामेति विख्यातः कथं तेन समागमः ॥ ०१६ ॥

रणे यं प्रेक्ष्य सीदन्ति हृतस्वा वणिजो यथा ।
कृपेण तेन ते तात कथमासीत्समागमः ॥ ०१७ ॥

पर्वतं योऽभिविध्येत राजपुत्रो महेषुभिः ।
दुर्योधनेन ते तात कथमासीत्समागमः ॥ ०१८ ॥

उत्तर उवाच ॥

न मया निर्जिता गावो न मया निर्जिताः परे ।
कृतं तु कर्म तत्सर्वं देवपुत्रेण केनचित् ॥ ०१९ ॥

स हि भीतं द्रवन्तं मां देवपुत्रो न्यवारयत् ।
स चातिष्ठद्रथोपस्थे वज्रहस्तनिभो युवा ॥ ०२० ॥

तेन ता निर्जिता गावस्तेन ते कुरवो जिताः ।
तस्य तत्कर्म वीरस्य न मया तात तत्कृतम् ॥ ०२१ ॥

स हि शारद्वतं द्रोणं द्रोणपुत्रं च वीर्यवान् ।
सूतपुत्रं च भीष्मं च चकार विमुखाञ्शरैः ॥ ०२२ ॥

दुर्योधनं च समरे सनागमिव यूथपम् ।
प्रभग्नमब्रवीद्भीतं राजपुत्रं महाबलम् ॥ ०२३ ॥

न हास्तिनपुरे त्राणं तव पश्यामि किञ्चन ।
व्यायामेन परीप्सस्व जीवितं कौरवात्मज ॥ ०२४ ॥

न मोक्ष्यसे पलायंस्त्वं राजन्युद्धे मनः कुरु ।
पृथिवीं भोक्ष्यसे जित्वा हतो वा स्वर्गमाप्स्यसि ॥ ०२५ ॥

स निवृत्तो नरव्याघ्रो मुञ्चन्वज्रनिभाञ्शरान् ।
सचिवैः संवृतो राजा रथे नाग इव श्वसन् ॥ ०२६ ॥

तत्र मे रोमहर्षोऽभूदूरुस्तम्भश्च मारिष ।
यदभ्रघनसङ्काशमनीकं व्यधमच्छरैः ॥ ०२७ ॥

तत्प्रणुद्य रथानीकं सिंहसंहननो युवा ।
कुरूंस्तान्प्रहसन्राजन्वासांस्यपहरद्बली ॥ ०२८ ॥

एकेन तेन वीरेण षड्रथाः परिवारिताः ।
शार्दूलेनेव मत्तेन मृगास्तृणचरा वने ॥ ०२९ ॥

विराट उवाच ॥

क्व स वीरो महाबाहुर्देवपुत्रो महायशाः ।
यो मे धनमवाजैषीत्कुरुभिर्ग्रस्तमाहवे ॥ ०३० ॥

इच्छामि तमहं द्रष्टुमर्चितुं च महाबलम् ।
येन मे त्वं च गावश्च रक्षिता देवसूनुना ॥ ०३१ ॥

उत्तर उवाच ॥

अन्तर्धानं गतस्तात देवपुत्रः प्रतापवान् ।
स तु श्वो वा परश्वो वा मन्ये प्रादुर्भविष्यति ॥ ०३२ ॥

वैशंपायन उवाच ॥

एवमाख्यायमानं तु छन्नं सत्रेण पाण्डवम् ।
वसन्तं तत्र नाज्ञासीद्विराटः पार्थमर्जुनम् ॥ ०३३ ॥

ततः पार्थोऽभ्यनुज्ञातो विराटेन महात्मना ।
प्रददौ तानि वासांसि विराटदुहितुः स्वयम् ॥ ०३४ ॥

उत्तरा तु महार्हाणि विविधानि तनूनि च ।
प्रतिगृह्याभवत्प्रीता तानि वासांसि भामिनी ॥ ०३५ ॥

मन्त्रयित्वा तु कौन्तेय उत्तरेण रहस्तदा ।
इतिकर्तव्यतां सर्वां राजन्यथ युधिष्ठिरे ॥ ०३६ ॥

ततस्तथा तद्व्यदधाद्यथावत्पुरुषर्षभ ।
सह पुत्रेण मत्स्यस्य प्रहृष्टो भरतर्षभः ॥ ०३७ ॥

---

# अध्याय ०६५

वैशंपायन उवाच ॥

ततस्तृतीये दिवसे भ्रातरः पञ्च पाण्डवाः ।
स्नाताः शुक्लाम्बरधराः समये चरितव्रताः ॥ ००१ ॥

युधिष्ठिरं पुरस्कृत्य सर्वाभरणभूषिताः ।
अभिपद्मा यथा नागा भ्राजमाना महारथाः ॥ ००२ ॥

विराटस्य सभां गत्वा भूमिपालासनेष्वथ ।
निषेदुः पावकप्रख्याः सर्वे धिष्ण्येष्विवाग्नयः ॥ ००३ ॥

तेषु तत्रोपविष्टेषु विराटः पृथिवीपतिः ।
आजगाम सभां कर्तुं राजकार्याणि सर्वशः ॥ ००४ ॥

श्रीमतः पाण्डवान्दृष्ट्वा ज्वलतः पावकानिव ।
अथ मत्स्योऽब्रवीत्कङ्कं देवरूपमवस्थितम् ॥ ००५ ॥

मरुद्गणैरुपासीनं त्रिदशानामिवेश्वरम् ॥ ००५ ॥

स किलाक्षातिवापस्त्वं सभास्तारो मया कृतः ।
अथ राजासने कस्मादुपविष्टोऽस्यलङ्कृतः ॥ ००६ ॥

परिहासेप्सया वाक्यं विराटस्य निशम्य तत् ।

स्मयमानोऽर्जुनो राजन्निदं वचनमब्रवीत्  ॥ ००७  ॥

इन्द्रस्याप्यासनं राजन्नयमारोढुमर्हति ।
ब्रह्मण्यः श्रुतवांस्त्यागी यज्ञशीलो दृढव्रतः  ॥ ००८  ॥

अयं कुरूणामृषभः कुन्तीपुत्रो युधिष्ठिरः ।
अस्य कीर्तिः स्थिता लोके सूर्यस्येवोद्यतः प्रभा  ॥ ००९  ॥

संसरन्ति दिशः सर्वा यशसोऽस्य गभस्तयः ।
उदितस्येव सूर्यस्य तेजसोऽनु गभस्तयः  ॥ ०१०  ॥

एनं दश सहस्राणि कुञ्जराणां तरस्विनाम् ।
अन्वयुः पृष्ठतो राजन्यावदध्यावसत्कुरून्  ॥ ०११  ॥

त्रिंशदेनं सहस्राणि रथाः काञ्चनमालिनः ।
सदश्वैरुपसंपन्नाः पृष्ठतोऽनुययुः सदा  ॥ ०१२  ॥

एनमष्टशताः सूताः सुमृष्टमणिकुण्डलाः ।
अस्तुवन्मागधैः सार्धं पुरा शक्रमिवर्षयः  ॥ ०१३  ॥

एनं नित्यमुपासन्त कुरवः किङ्करा यथा ।
सर्वे च राजन्राजानो धनेश्वरमिवामराः  ॥ ०१४  ॥

एष सर्वान्महीपालान्करमाहारयत्तदा ।
वैश्यानिव महाराज विवशान्स्ववशानपि  ॥ ०१५  ॥

अष्टाशीतिसहस्राणि स्नातकानां महात्मनाम् ।
उपजीवन्ति राजानमेनं सुचरितव्रतम्  ॥ ०१६  ॥

एष वृद्धाननाथांश्च व्यङ्गान्पङ्गूंश्च मानवान् ।
पुत्रवत्पालयामास प्रजा धर्मेण चाभिभो  ॥ ०१७  ॥

एष धर्मे दमे चैव क्रोधे चापि यतव्रतः ।
महाप्रसादो ब्रह्मण्यः सत्यवादी च पार्थिवः ॥ ०१८ ॥

श्रीप्रतापेन चैतस्य तप्यते स सुयोधनः ।
सगणः सह कर्णेन सौबलेनापि वा विभुः ॥ ०१९ ॥

न शक्यन्ते ह्यस्य गुणाः प्रसंख्यातुं नरेश्वर ।
एष धर्मपरो नित्यमानृशंस्यश्च पाण्डवः ॥ ०२० ॥

एवंयुक्तो महाराजः पाण्डवः पार्थिवर्षभः ।
कथं नार्हति राजार्हमासनं पृथिवीपतिः ॥ ०२१ ॥

---

# अध्याय ०६६

विराट उवाच ॥

यद्येष राजा कौरव्यः कुन्तीपुत्रो युधिष्ठिरः ।
कतमोऽस्यार्जुनो भ्राता भीमश्च कतमो बली ॥ ००१ ॥

नकुलः सहदेवो वा द्रौपदी वा यशस्विनी ।
यदा द्यूते जिताः पार्था न प्राज्ञायन्त ते क्वचित् ॥ ००२ ॥

अर्जुन उवाच ॥

य एष बल्लवो ब्रूते सूदस्तव नराधिप ।
एष भीमो महाबाहुर्भीमवेगपराक्रमः ॥ ००३ ॥

एष क्रोधवशान्हत्वा पर्वते गन्धमादने ।
सौगन्धिकानि दिव्यानि कृष्णार्थे समुपाहरत् ॥ ००४ ॥

गन्धर्व एष वै हन्ता कीचकानां दुरात्मनाम् ।
व्याघ्रानृक्षान्वराहांश्च हतवान्स्त्रीपुरे तव ॥ ००५ ॥

यश्चासीदश्वबन्धस्ते नकुलोऽयं परंतपः ।
गोसंख्यः सहदेवश्च माद्रीपुत्रौ महारथौ ॥ ००६ ॥

शृङ्गारवेषाभरणौ रूपवन्तौ यशस्विनौ ।
नानारथसहस्राणां समर्थौ पुरुषर्षभौ ॥ ००७ ॥

एषा पद्मपलाशाक्षी सुमध्या चारुहासिनी ।
सैरन्ध्री द्रौपदी राजन्यत्कृते कीचका हताः ॥ ००८ ॥

अर्जुनोऽहं महाराज व्यक्तं ते श्रोत्रमागतः ।
भीमादवरजः पार्थो यमाभ्यां चापि पूर्वजः ॥ ००९ ॥

उषिताः स्म महाराज सुखं तव निवेशने ।
अज्ञातवासमुषिता गर्भवास इव प्रजाः ॥ ०१० ॥

वैशंपायन उवाच ॥

यदार्जुनेन ते वीराः कथिताः पञ्च पाण्डवाः ।
तदार्जुनस्य वैराटिः कथयामास विक्रमम् ॥ ०११ ॥

अयं स द्विषतां मध्ये मृगाणामिव केसरी ।
अचरद्रथवृन्देषु निघ्नंस्तेषां वरान्वरान् ॥ ०१२ ॥

अनेन विद्धो मातङ्गो महानेकेषुणा हतः ।

हिरण्यकक्ष्यः सङ्ग्रामे दन्ताभ्यामगमन्महीम् ॥ ०१३ ॥

अनेन विजिता गावो जिताश्च कुरवो युधि ।
अस्य शङ्खप्रणादेन कर्णौ मे बधिरीकृतौ ॥ ०१४ ॥

तस्य तद्वचनं श्रुत्वा मत्स्यराजः प्रतापवान् ।
उत्तरं प्रत्युवाचेदमभिपन्नो युधिष्ठिरे ॥ ०१५ ॥

प्रसादनं पाण्डवस्य प्राप्तकालं हि रोचये ।
उत्तरां च प्रयच्छामि पार्थाय यदि ते मतम् ॥ ०१६ ॥

उत्तर उवाच ॥

अर्च्याः पूज्याश्च मान्याश्च प्राप्तकालं च मे मतम् ।
पूज्यन्तां पूजनार्हाश्च महाभागाश्च पाण्डवाः ॥ ०१७ ॥

विराट उवाच ॥

अहं खल्वपि सङ्ग्रामे शत्रूणां वशमागतः ।
मोक्षितो भीमसेनेन गावश्च विजितास्तथा ॥ ०१८ ॥

एतेषां बाहुवीर्येण यदस्माकं जयो मृधे ।
वयं सर्वे सहामात्याः कुन्तीपुत्रं युधिष्ठिरम् ॥ ०१९ ॥

प्रसादयामो भद्रं ते सानुजं पाण्डवर्षभम् ॥ ०१९ ॥

यदस्माभिरजानद्भिः किञ्चिदुक्तो नराधिपः ।
क्षन्तुमर्हति तत्सर्वं धर्मात्मा ह्येष पाण्डवः ॥ ०२० ॥

वैशंपायन उवाच ॥

ततो विराटः परमाभितुष्टः ; समेत्य राज्ञा समयं चकार ।
राज्यं च सर्वं विससर्ज तस्मै ; सदण्डकोशं सपुरं महात्मा ॥ ०२१ ॥

पाण्डवांश्च ततः सर्वान्मत्स्यराजः प्रतापवान् ।
धनञ्जयं पुरस्कृत्य दिष्ट्या दिष्ट्येति चाब्रवीत् ॥ ०२२ ॥

समुपाघ्राय मूर्धानं संश्लिष्य च पुनः पुनः ।
युधिष्ठिरं च भीमं च माद्रीपुत्रौ च पाण्डवौ ॥ ०२३ ॥

नातृप्यद्दर्शने तेषां विराटो वाहिनीपतिः ।
संप्रीयमाणो राजानं युधिष्ठिरमथाब्रवीत् ॥ ०२४ ॥

दिष्ट्या भवन्तः संप्राप्ताः सर्वे कुशलिनो वनात् ।
दिष्ट्या च पारितं कृच्छ्रमज्ञातं वै दुरात्मभिः ॥ ०२५ ॥

इदं च राज्यं नः पार्था यच्चान्यद्वसु किञ्चन ।
प्रतिगृह्णन्तु तत्सर्वं कौन्तेया अविशङ्कया ॥ ०२६ ॥

उत्तरां प्रतिगृह्णातु सव्यसाची धनञ्जयः ।
अयं ह्यौपयिको भर्ता तस्याः पुरुषसत्तमः ॥ ०२७ ॥

एवमुक्तो धर्मराजः पार्थमैक्षद्धनञ्जयम् ।
ईक्षितश्चार्जुनो भ्रात्रा मत्स्यं वचनमब्रवीत् ॥ ०२८ ॥

प्रतिगृह्णाम्यहं राजन्स्नुषां दुहितरं तव ।
युक्तश्चावां हि संबन्धो मत्स्यभारतसत्तमौ ॥ ०२९ ॥

# अध्याय ०६७

विराट उवाच ॥

किमर्थं पाण्डवश्रेष्ठ भार्यां दुहितरं मम ।
प्रतिग्रहीतुं नेमां त्वं मया दत्तामिहेच्छसि ॥ ००१ ॥

अर्जुन उवाच ॥

अन्तःपुरेऽहमुषितः सदा पश्यन्सुतां तव ।
रहस्यं च प्रकाशं च विश्वस्ता पितृवन्मयि ॥ ००२ ॥

प्रियो बहुमतश्चाहं नर्तको गीतकोविदः ।
आचार्यवच्च मां नित्यं मन्यते दुहिता तव ॥ ००३ ॥

वयःस्थया तया राजन्सह संवत्सरोषितः ।
अतिशङ्का भवेत्स्थाने तव लोकस्य चाभिभो ॥ ००४ ॥

तस्मान्निमन्त्रये त्वाहं दुहितुः पृथिवीपते ।
शुद्धो जितेन्द्रियो दान्तस्तस्याः शुद्धिः कृता मया ॥ ००५ ॥

स्नुषाया दुहितुर्वापि पुत्रे चात्मनि वा पुनः ।
अत्र शङ्कां न पश्यामि तेन शुद्धिर्भविष्यति ॥ ००६ ॥

अभिषङ्गादहं भीतो मिथ्याचारात्परंतप ।
स्नुषार्थमुत्तरां राजन्प्रतिगृह्णामि ते सुताम् ॥ ००७ ॥

स्वस्त्रीयो वासुदेवस्य साक्षाद्देवशिशुर्यथा ।
दयितश्चक्रहस्तस्य बाल एवास्त्रकोविदः ॥ ००८ ॥

अभिमन्युर्महाबाहुः पुत्रो मम विशां पते ।

जामाता तव युक्तो वै भर्ता च दुहितुस्तव ॥ ००९ ॥

विराट उवाच ॥

उपपन्नं कुरुश्रेष्ठे कुन्तीपुत्रे धनञ्जये ।
य एवं धर्मनित्यश्च जातज्ञानश्च पाण्डवः ॥ ०१० ॥

यत्कृत्यं मन्यसे पार्थ क्रियतां तदनन्तरम् ।
सर्वे कामाः समृद्धा मे संबन्धी यस्य मेऽर्जुनः ॥ ०११ ॥

वैशंपायन उवाच ॥

एवं ब्रुवति राजेन्द्रे कुन्तीपुत्रो युधिष्ठिरः ।
अन्वजानात्स संयोगं समये मत्स्यपार्थयोः ॥ ०१२ ॥

ततो मित्रेषु सर्वेषु वासुदेवे च भारत ।
प्रेषयामास कौन्तेयो विराटश्च महीपतिः ॥ ०१३ ॥

ततस्त्रयोदशे वर्षे निवृत्ते पञ्च पाण्डवाः ।
उपप्लव्ये विराटस्य समपद्यन्त सर्वशः ॥ ०१४ ॥

तस्मिन्वसंश्च बीभत्सुरानिनाय जनार्दनम् ।
आनर्तेभ्योऽपि दाशार्हानभिमन्युं च पाण्डवः ॥ ०१५ ॥

काशिराजश्च शैब्यश्च प्रीयमाणौ युधिष्ठिरे ।
अक्षौहिणीभ्यां सहितावागतौ पृथिवीपते ॥ ०१६ ॥

अक्षौहिण्या च तेजस्वी यज्ञसेनो महाबलः ।
द्रौपद्याश्च सुता वीराः शिखण्डी चापराजितः ॥ ०१७ ॥

धृष्टद्युम्नश्च दुर्धर्षः सर्वशस्त्रभृतां वरः ।

समस्ताक्षौहिणीपाला यज्वानो भूरिदक्षिणाः ॥ ०१८ ॥

सर्वे शस्त्रास्त्रसंपन्नाः सर्वे शूरास्तनुत्यजः ॥ ०१८ ॥

तानागतानभिप्रेक्ष्य मत्स्यो धर्मभृतां वरः ।
प्रीतोऽभवद्दुहितरं दत्त्वा तामभिमन्यवे ॥ ०१९ ॥

ततः प्रत्युपयातेषु पार्थिवेषु ततस्ततः ।
तत्रागमद्वासुदेवो वनमाली हलायुधः ॥ ०२० ॥

कृतवर्मा च हार्दिक्यो युयुधानश्च सात्यकिः ॥ ०२० ॥

अनाधृष्टिस्तथाक्रूरः साम्बो निशठ एव च ।
अभिमन्युमुपादाय सह मात्रा परंतपाः ॥ ०२१ ॥

इन्द्रसेनादयश्चैव रथैस्तैः सुसमाहितैः ।
आययुः सहिताः सर्वे परिसंवत्सरोषिताः ॥ ०२२ ॥

दश नागसहस्राणि हयानां च शतायुतम् ।
रथानामर्बुदं पूर्णं निखर्वं च पदातिनाम् ॥ ०२३ ॥

वृष्ण्यन्धकाश्च बहवो भोजाश्च परमौजसः ।
अन्वयुर्वृष्णिशार्दूलं वासुदेवं महाद्युतिम् ॥ ०२४ ॥

पारिबर्हं ददौ कृष्णः पाण्डवानां महात्मनाम् ।
स्त्रियो रत्नानि वासांसि पृथक्पृथगनेकशः ॥ ०२५ ॥

ततो विवाहो विधिवद्ववृते मत्स्यपार्थयोः ॥ ०२५ ॥

ततः शङ्खाश्च भेर्यश्च गोमुखाडम्बरास्तथा ।
पार्थैः संयुज्यमानस्य नेदुर्मत्स्यस्य वेश्मनि ॥ ०२६ ॥

उच्चावचान्मृगाञ्जघ्नुर्मेध्यांश्च शतशः पशून् ।
सुरामैरेयपानानि प्रभूतान्यभ्यहारयन्  ॥ ०२७  ॥

गायनाख्यानशीलाश्च नटा वैतालिकास्तथा ।
स्तुवन्तस्तानुपातिष्ठन्सूताश्च सह मागधैः  ॥ ०२८  ॥

सुदेष्णां च पुरस्कृत्य मत्स्यानां च वरस्त्रियः ।
आजग्मुश्चारुसर्वाङ्ग्यः सुमृष्टमणिकुण्डलाः  ॥ ०२९  ॥

वर्णोपपन्नास्ता नार्यो रूपवत्यः स्वलङ्कृताः ।
सर्वाश्चाभ्यभवत्कृष्णा रूपेण यशसा श्रिया  ॥ ०३०  ॥

परिवार्योत्तरां तास्तु राजपुत्रीमलङ्कृताम् ।
सुतामिव महेन्द्रस्य पुरस्कृत्योपतस्थिरे  ॥ ०३१  ॥

तां प्रत्यगृह्णात्कौन्तेयः सुतस्यार्थे धनञ्जयः ।
सौभद्रस्यानवद्याङ्गीं विराटतनयां तदा  ॥ ०३२  ॥

तत्रातिष्ठन्महाराजो रूपमिन्द्रस्य धारयन् ।
स्नुषां तां प्रतिजग्राह कुन्तीपुत्रो युधिष्ठिरः  ॥ ०३३  ॥

प्रतिगृह्य च तां पार्थः पुरस्कृत्य जनार्दनम् ।
विवाहं कारयामास सौभद्रस्य महात्मनः  ॥ ०३४  ॥

तस्मै सप्त सहस्राणि हयानां वातरंहसाम् ।
द्वे च नागशते मुख्ये प्रादाद्बहु धनं तदा  ॥ ०३५  ॥

कृते विवाहे तु तदा धर्मपुत्रो युधिष्ठिरः ।
ब्राह्मणेभ्यो ददौ वित्तं यदुपाहरदच्युतः  ॥ ०३६  ॥

गोसहस्राणि रत्नानि वस्त्राणि विविधानि च ।
भूषणानि च मुख्यानि यानानि शयनानि च ॥ ०३७ ॥

तन्महोत्सवसङ्काशं हृष्टपुष्टजनावृतम् ।
नगरं मत्स्यराजस्य शुशुभे भरतर्षभ ॥ ०३८ ॥

---

Mahabharata
Encoding : ISCII
Electronic text (C) Bhandarkar Oriental Research Institute, Pune, India, 1999
http ://bombay.indology.info/mahabharata/statement.html for further details
Converted for devanagari output using xetex-itrans with sdvn mapping on July 23, 2013